CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ।
एकदंष्ट्रो(न्तो) वक्रतुण्डो गजवक्त्रो महोदरः ॥ ६ ॥

ॐ वियदादिप्रपञ्चस्य समूहो गण उच्यते । तदात्मकस्तदीशश्च तेन देवो गणेश्वरः[1] ॥ १ ॥ साक्षाच्छिष्यो गणेशस्य गणक्रीडाभिधो गुरुः । तच्छिष्यो विकटस्तस्य शिष्यो वै विघ्ननाय(श)कः ॥ २ ॥ इत्यादयोऽप्यभेदेन गणेशा एव देशिकाः । मंत्रारंभे गुरुस्मृत्यावश्य-कत्वेन कीर्तिताः ॥ ३॥ वियदादिगणस्यान्तः प्रविश्य क्रीडनेन वा । गणक्रीड इति प्रोक्तस्तत्सृष्ट्वेत्यादिविश्रुतेः[2] ॥ ४ ॥ गणनं गुणसंख्यानामथशब्दात्तु मंगलम्। कृते तयोर्बहुव्रीहौ गणनाथ इति स्मृतः[3] ॥ ५ ॥ आदित्यविश्ववस्वाद्या रुद्रान्ता गणदेवताः ।

---

1. गणेशाद्याश्च चत्वारो[1] मूर्तयो ब्रह्मणस्पतेः ।
अव्यक्ताद्यास्तत्वगणाः ब्रह्माद्या देवतागणाः ॥
अन्नादयो ब्रह्मगणाः स्मृता एव त्रिधा गणाः ।
गणात्मकस्तदीशश्च तेन देवो गणेश्वरः[2] ॥ (ब्रह्म)
(१. गणेशः गालवः मुद्गलः सुधाकरः इति ।)
२. जगद्रूपो गकारश्च णकारो ब्रह्मवाचकः ।
तयोर्योगे गणेशाय नाम तुभ्यं नमो नमः ॥ (मुद्गले ।)
ज्ञानार्थवाचको गश्च णश्च निर्वाणवाचकः ।
तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥ (ब्रह्मवैवर्ते)

2. त्रिविधेषु गणेष्वन्तः प्रविश्य क्रीडनेन च ।
गणक्रीड इति प्रोक्तः तत्सृष्ट्वेत्यादितः श्रुतेः ॥
गुणनिर्गुणरूपेण चतुर्ष्वपि जगत्सु च ।
क्रीडकस्तु स्वस्वरूपी गणक्रीड इति स्मृतः ॥ (ब्रह्म)

3. सर्वाकारा महामाया प्रकृतिर्गुणरूपिणी ।
तस्याः सत्तादायकोऽयं निर्गुणो गणनाथकः ।
चिन्मायासंयोगरूपी सगुणो गणनाथकः ॥ (ब्रह्मा)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



तदाधिपत्यशालित्वान्मम देवो गणाधिपः[1] ॥ ६ ॥ एका मुख्या केवला वा दंष्ट्रा यस्य गणेशितुः । भूम्युद्धारे जगन्नाशे वैकदंष्ट्रः स कीर्त्यते[2] ॥ ७ ॥ [3]शुण्डादण्डस्य वक्रत्वाद् वक्रतुण्ड इतीर्यते । श्रियं तनोति रम्याणां विकारोऽपीति लोकवाक् ॥ ८ ॥ गजस्येव मुखं यस्य गजवक्त्रः स उच्यते[4] । अनंतकोटिब्रह्माण्डपूर्णकुक्षिर्महोदरः ॥ ९ ॥

**लंबोदरो धूम्रवर्णो विकटो विघ्ननायकः ।**
**सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ॥ ७ ॥**

1. जगज्जीवेश्वराणां च समूहो गण उच्यते ।
तदाधिपत्यशालित्वात् देवदेवो गणाधिपः ॥
संप्रज्ञातासंप्रज्ञातसमाधीनां समूहकः ।
गण इत्येव कथितः तदीशः स्वमहिम्निगः ॥
पूर्ण योगात्मको देवो गणेश इति कथ्यते ।
चतुर्विधानां जगतामधिपोऽयं गणाधिपः ॥ (ब्रह्मा)

2. एकशब्दात्मिका माया दन्तः सत्ताधरो मतः ।
तयोरभेदसंयोगे चैकदन्त इति स्मृतः ।
एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः ।
बलं प्रधानं सर्वस्मात् एकदन्तं नमाम्यहम् ॥ (ब्रह्मैव)

3. वक्रतुण्डादयश्चाष्ट ह्यवताराः[१] परात्मनः ।
१. वक्रतुण्डः, एकदन्तः, महोदरः, गजाननः, लम्बोदरः
विकटः विघ्नराजः, धूम्रवर्णः इति । (मुद्गल)
कला माया इति प्रोक्ताः स्वानन्देशस्य ब्रह्मणः ॥
असंप्रज्ञातसमाधि स्थितिरूपाः पुरातनाः ।
वक्रा विघ्ना इति प्रोक्ताः विघ्नाः सत्तात्मकाः स्मृताः ॥
तुण्डेन हन्ति तान्देवो वक्रतुण्डो मतो बुधैः ।

4. गजात्मकं परं ब्रह्म निर्गुणं यस्य वक्त्रकम् ।
मुखचिह्नाज्ज्ञायते यः स एव गजवक्त्रकः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ब्रह्माण्डालंबनं यस्य कुक्षिर्लम्बोदरस्तु सः । वायोर्बीजं धूम्रवर्णं तद्रूपत्वादसावपि[1] ॥ १० ॥ 'कट वर्षावरणयोरिति धातोरनावृतेः । विभुत्वाद् विकटः प्रोक्तः स यस्य विगतः कटः ॥ ११ ॥ विघ्नान्नयति भक्तौघात् विघ्नानामधिपोऽथ वा । यद्वा विहन्ति नयति प्राणिनो विघ्ननायकः[2] ॥ १२ ॥ आरंभाः शोभना येन यस्य शोभनमाननम् । स एव सुमुखस्तस्मै सुमुखाय नमो नमः ॥ १३ ॥ दुःस्पर्शं वा सुदुर्दर्शमग्नेः सूर्यस्य वा मुखम् । तद्रूपत्वादभक्तेषु तथात्वाच्चैष दुर्मुखः[3] ॥ १४ ॥ नित्यबुद्धस्वरूपत्वात् अविद्यावृत्तिनाशनः । यद्वा जिनावतारत्वाद् बुद्ध इत्यभिधीयते[4] ॥ १५ ॥ विघ्नैर्विराजते तेषां राजा विघ्नस्तु विघ्नकः । भक्ताधीनश्च राजा च विघ्नराजस्ततो मतः[5] ॥ १६ ॥ 'अन प्राणन' इत्यस्माद्धातोर्णिचि ततो ल्युटि । गजाननयतीत्यर्थे साधुरेष गजाननः[6] ॥ १७ ॥

**भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः ।**
**हेरम्बः शम्बरः शम्भुर्लम्बकर्णो महाबलः ॥ ८ ॥**

1. धूम्रायन्ते यत्रवर्णा धूम्रवर्णः स ईरितः ।
2. विघ्नान्नयत्यभक्तौघान् विघ्नानामधिपोऽथवा ।
3. दुःस्पर्शं वा सुदुर्दर्शं सूर्याग्निविद्युतामिव
   तद्वन्मुखमभक्ताय दुर्मुखाय नमो नमः ।
4. बुद्ध्यारूढो बुद्ध इति चित्तवृत्ति प्रचालकः ।
5. विघ्नः कालात्मकस्तस्य विघ्नराजो नियामकः ॥
6. गजा सत्वमयी माया तस्याः सत्ताप्रदानतः ।
   अननात्प्राणदो देवो गजानन महेश्वरः ॥
   गकारः सर्वगं ब्रह्म गजानन इति स्मृतम् ।
   गजस्य वक्त्रसंयुक्तः शिवपुत्रो गजाननः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



दुष्टानां भयकारित्वाद् भीम इत्युच्यते बुधैः । इष्टलाभात्सुखं यत्तु स प्रमोद इति स्मृतः ॥ १८ ॥ ततः प्राक् सुखमामोद इष्टार्थप्राप्तिनिश्चयात् । [1]इष्टार्थभोगजनितं सुखमानन्द उच्यते ॥ १९ ॥ स सुरोत्थः सुरस्थो(रार्थो)वा सुरानन्दस्तदात्मना । अत एवान्य-विषयमोषादात्मैकभानतः ॥ २० ॥ मदेनावरणोत्क्रांत्या मदोत्कट इति स्मृतः । हः शंकरे रविः शब्दे शैवतंत्रप्रवर्तनात् ॥ २१ ॥ उद्दामशौर्यवत्त्वाद्वा हेरम्ब इति कथ्यते[2] । शं सुखं तद्वरं श्रेष्ठं यस्मिन्नस्ति स शंबरः ॥ २२ ॥ शंबं वा कुलिशं राति यद्वा सलिलविग्रहः । शंभुस्तु शं भवत्यस्माच्छिवाभेदेन वोदितः ॥ २३ ॥ यत्र क्वापि कृतं भक्तैराह्वानस्तवनादिकम् । नातिदूर इवाकर्ण्य लंबकर्ण इति स्मृतः ॥ २४ ॥ महान्बलासुरो येन बलित्वाद्वा महाबलः । (महाबला जिता येन बलित्वाद्वा महाबलः)

**नंदनोऽलंपटोऽभीरुर्मेघनादो गणंजयः ।**
**विनायको विरूपाक्षो धीरशूरो वरप्रदः ॥ ९ ॥**
**महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ।**
**रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ॥ १० ॥**

नदिः समृद्धिवाचीति तद्धेतौ ल्युटि नंदनः ॥ २५ ॥ अलंपटः समृद्धत्वादलंकारः पटोऽस्य वा । अभीरुर्भयशून्यत्वात् अङ्गनारहितोऽथ वा ॥ २६ ॥ मेघनादः प्रसिद्धार्थो मेघान् नादयतीति वा । एकैकं यत्नतः शत्रुं जयति प्राकृतो जनः ॥ २७ ॥ अनायासादयं व्यूहान् जयतीति

1. इष्टार्थ भोगजनित आनन्दस्तु प्रमोदकः ।
तदात्मकः प्रमोदः स्यात्, इष्टार्थलाभसंभवः ।
आमोदस्तन्मयो देवः आमोद इति कथ्यते । (ब्रह्मा)

2. हे जीवस्तु परो रंबो द्विभेदपरिवर्जितः ।
सर्वसाक्षी परं ब्रह्म हेरंबोद्दामशौर्यवान् ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



गणंजय[1]: ॥ विः पक्षिरूपो जीवौघःतन्नेतृत्वाद्विनायकः[2] ॥ २८ ॥ विरूपाक्षो विसदृशैर्नेत्रैरग्निरवींदुभिः । धीरशूरो धैर्यशौर्य-सामानाधिकरण्यतः ॥ २९ ॥ वरान् स्वपादसेविभ्यो ददातीति वरप्रदः ॥[3] गणाः गुल्मादयः सेनाभेदास्तेषु य उत्तमः ॥ ३० ॥ स्थूलास्तानपि पातीति महागणपतिर्मतः । [4] बुद्धिप्रियः संशयघ्नो बुद्धिः स्यान्निश्चयात्मिका ॥ ३१ ॥ [5] क्षिप्रप्रसादनः क्षिप्रं भक्तैर्ध्यातः प्रसीदति । रुद्रप्रिय इति प्रोक्तो रुद्रैकादशिनीप्रियः ॥ ३२ ॥ [6]गणाध्यक्षस्तु षट्त्रिंशत्तत्त्व-संदोहपालकः । उमापुत्रस्तु पुँल्लोकात्पार्वत्या अपि तारकः ॥ ३३ ॥ महोदरोऽप्यसावल्पनैवेद्यैनैव तृप्यति । अशनं न घनं दुःखहरणाद्वाऽघनाशनः[7] ॥ ३४ ॥

कुमारगुरुरीशानपुत्रो मूषकवाहनः ।
सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः ॥ ११ ॥

---

1. गणासुरस्य जेतायं गणञ्जय इति स्मृतः ।
2. विगतो नायको यस्य विनायक इति श्रुतः । (ब्रह्मा)
3. धीरश्च धैर्यवान् शूरः शौर्यवांश्च वरान्स्वकान् ।
   इष्टान् सर्वान्ददातीति पातीति च वरप्रदः । (ब्रह्मा)
4. वियदादिप्रपञ्चस्य समूहो गण उच्यते ।
   तस्य पाता गणपतिः शंभुपुत्रो गणेश्वरः ।
   व्याकृताव्याकृतमयचतुर्णां जगतामपि ।
   महागणाः समूहाश्च महागणपतिः पतिः । (ब्रह्मा)
5. पञ्चचित्तवृत्तिमयी बुद्धिर्मायामयी परा ।
   तस्याः पतिर्गणेशानो बुद्धिप्रिय इति स्मृतः । (ब्रह्मा)
6. रुद्रस्य प्रियदत्वाच्च रुद्रप्रिय इति स्मृतः ।
7. अघस्य पापसंज्ञस्य हरणादघनाशनः ॥ (ब्रह्मा)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



**अविघ्नस्तुंबुरुः सिंहवाहनो मोहिनीप्रियः ।**
**कटंकटो राजपुत्रः शालकः संमितोऽमितः ॥ १२ ॥**

सनत्कुमाररूपोऽपि विद्यामुपदिशन् गुरुः । स्कन्दपूर्वभवत्वाद्वा कुमार-गुरुरीरितः[1] ॥ ३५ ॥ ईशानपुत्र इत्युक्तः शितिकण्ठात्मजत्वतः। उन्दुरुं वाहनीकृत्य ख्यातो मूषकवाहनः[2] ॥ ३६ ॥ सिद्धिप्रियः प्रिया अस्येत्यणिमाद्यष्टसिद्धयः[3] ॥ अणिमाद्यष्टसिद्धीनां पाता सिद्धिपति-स्ततः ॥ ३७ ॥ गोरक्षादिमहासिद्धरूपत्वात् सिद्ध उच्यते । भक्ते सिद्धीर्विशेषेण नयन् सिद्धिविनायकः[4] ॥ ३८ ॥ भावप्रधान-निर्देशादवित्वं पशुतां हरन् । विघ्नैर्विरहितत्वाद्वाऽप्यविघ्न इति कथ्यते ॥ ३९ ॥ रोरूयमाणस्तुंबेन वैणिकैरिति तुंबुरुः । इमे गायंति वीणायां एतमेवेति हि श्रुतिः ॥ ४० ॥ मयूरमूषकौ यद्वत्तथा सिंहोऽपि वाहनम् । गौर्या वा सिंहवाहाया अभेदात्सिंहवाहनः ॥ ४१ ॥ मोहिनीशः शिवस्तस्मादभिन्नो मोहिनीप्रियः[5]। कटमावृतिरज्ञानं नीहारेणेति हि श्रुतेः ॥ ४२ ॥ कटयत्यावृणोतीति ज्ञानदानात्कटंकटः । वरेण्याख्यस्य पृथिवीनेतुः पुत्रवदाचरन् ॥ ४३ ॥ चंद्रो वा पुत्रवद्यस्य राजपुत्रः स उच्यते[6] ॥ शः परोक्षेऽलकः केशो यस्यैकांशोऽप्यचाक्षुषः ॥ ४४ ॥ सोऽतींद्रियः शालतेऽसौ राजतेवेति शालकः । अंगुष्ठमात्र इत्यादि श्रुत्या व्याप्तोऽपि संमितः ॥ ४५ ॥ मशकेनापि नागेन सम इत्यपि च श्रुतेः ।

1. सनत्कुमारमुख्यानां विद्यामुपदिशन् गुरुः । (ब्रह्मा)
2. स्तेयं ब्रह्म यस्य वाहः तेन मूषकवाहनः । (ब्रह्मा)
3. बुद्धेर्हर्षमोहदात्री सिद्धिर्मायामयी परा ।
   प्रिया यस्य तु सा सिद्धिः अणिमाद्यष्टसिद्धयः । (ब्रह्मा)
4. भक्तान् सिद्धया विशेषेण नयन् सिद्धिविनायकः । (ब्रह्मा)
5. मोहिनी पञ्चमी कन्या भुवनेशीसमुद्भवा ।
   गणेशस्य प्रिया सा तु तेनायं मोहिनीप्रियः ।
6. महाराज्ञीसुतश्चास्मि कुरुराज सुतोऽपि वा ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



परिमाणं त्वणु स्थूलं ह्रस्वं दीर्घं चतुर्विधम् ॥ ४६ ॥ तन्नास्तीत्यमितोऽस्थूलमनण्वित्यादितः श्रुतेः ।

**कूष्माण्डसामसंभूतिर्दुर्जयो धूर्वहो जयः ।**
**भूपतिर्भुवनेशानो भूतानांपतिरव्ययः ॥ १३ ॥**

**विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्घृणिः ।**
**कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मणस्पतिः ॥ १४ ॥**

कूष्माण्डसामसंभूतिः कूष्माण्डैर्जुहुयादिति ॥ ४७ ॥ विधौ प्रसिद्धा मंत्राश्च सामानि अस्य विभूतयः । अजय्यो बलिभिर्दैत्यैर्मनसापीति दुर्जयः ॥ ४८ ॥ धुरं वहत्यनायासाज्जगतामिति धूर्वहः । जयो जयस्वरूपत्वाद्धारताद्यात्मकत्वतः ॥ ४९ ॥ भूपतिर्भुवनपतिर्भूतानांपतिरित्यमी । भ्रातरोऽग्रेस्तदात्मत्वाद्भूपत्यादिः प्रकीर्तितः[1] ॥ ५० ॥ अव्ययो नाशराहित्याद् विश्वकर्ता जगत्कृतेः । विश्वस्य मुखमारंभो यस्माद्विश्वं मुखेऽस्य वा ॥ ५१ ॥ विश्वस्य मुखवत्तृप्तिहेतुर्विश्वमुखस्ततः । सर्वप्रपंचरूपत्वाद् विश्वरूप इति स्मृतिः ॥ ५२ ॥ अथवा विश्वरूपोऽसौ त्वाष्ट्रो देवपुरोहितः । वियदादिजगज्जातं नितरां यत्र धीयते ॥ ५३ ॥ महापद्मादिनवकरूपत्वाद्वा निधिः स्मृतः । घृणिरादित्यरूपत्वाद् घृणिः सूर्य इति श्रुतेः ॥ ५४ ॥ काव्यत्वात् काव्यकर्तृत्वात् कविरेष तथा कविं — । कवीनामुपमश्रुत्या कवीनामृषभोऽप्ययम्[2] ॥ ५५ ॥ ब्रह्मण्यो ब्राह्मणे वेदे साधुस्तपसि धातरि[3] । वाग्वै ब्रह्म पतिस्तस्या इत्येष ब्रह्मणस्पतिः ॥ ५६ ॥

---

1. भूपती राजपुत्रत्वाद्भुवनस्य पतिर्विभुः ।
भूतानामीश्वरोऽयं तु जगद्ब्रह्मस्वरूपवान् ॥

2. कविस्तु काव्यरूपत्वात्साक्षी कूटस्थसंज्ञकः ।
चिन्मायायोगरूपत्वात्कवीनामृषभो मतः ॥

3. ब्रह्मण्यो मुनिजत्वाच्च ब्रह्मणो ब्रह्मणस्पतिः ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः ।
हिरण्मयपुरान्तस्थः सूर्यमण्डलमध्यगः ॥ १५ ॥

कराहतिध्वस्तसिंधुसलिलः पूषदन्तभित् ।
उमाङ्कंकेलिकुतुकी मुक्तिदः कुलपालनः ॥ १६ ॥

ज्येष्ठराज इति ख्यातो ज्येष्ठाख्ये साम्नि राजनात् । एष नाम्ना निधिपतिर्निधीनां परिपालनात्[1] ॥ ५७ ॥ निधीनां त्वा निधिपतिं हवामह इति श्रुतेः । निधिप्रिया ये पतयो राजराजादयो नृपाः ॥ ५८ ॥ तैरप्युपास्य इत्येष निधिप्रियपतिप्रियः । हिरण्मयपुरान्तःस्थो दहराकाशमध्यगः ॥ ५९ ॥ चिन्मयब्रह्मपूर्देहस्तदंतर्हृदये स्थितेः । ध्येयत्वादंतरादित्ये सूर्यमंडलमध्यगः ॥ ६० ॥ शुण्डादण्डाभिघातेन रिक्तमब्धिं चकार यः ॥ कराहतिध्वस्तसिंधुसलिलः स ततो मतः ॥ ६१ ॥ वीरभद्रो दक्षमखे पूष्णो दंतानपातयत् । तद्रूपत्वादसौ देवः कथ्यते पूषदन्तभित्[2] ॥ ६२ ॥ गौर्युत्संगे कृताक्रीडो न बाल्यात्किंतु कौतुकात् । अत एवोमाङ्कंकेलिकुतुकी विबुधैः स्मृतः ॥ ६३ ॥ निगडान्मोचनान्मोक्षदानाद्वा मुक्तिदो मतः[3] । वंशस्य कौलतंत्रस्याप्यवनात् कुलपालनः ॥ ६४ ॥[4]

1. जलनिधिः समुद्रः स्याद्धननिधिस्तु यक्षपः ।
प्रजापतिनिधिर्ब्रह्मा सूर्यस्तेजोनिधिः स्मृतः ॥
एतादृशनिधीनां तु पतिर्निधिपतिप्रियः ॥

2. विनायकः सूर्ययुद्धे पूष्णो दन्तानपातयत् ।
तेन देवो मण्डलस्थः कथ्यते पूषदन्तभित् ॥

3. मोक्षद्वारं मण्डलं तु तत्रस्थो मुक्तिदो मतः ।
निगडाद्भवबन्धाद्वा मोचनान्मुक्तिदो भवान् ॥

4. वंशस्य दक्षराजस्य पालनात्कुलपालनः ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



किरीटी कुण्डली हारी वनमाली मनोमयः
वैमुख्यहतदैत्यश्रीः पादाहतिजितक्षितिः ॥ १७ ॥

सद्योजातस्वर्णमुञ्जमेखली दुर्निमित्तहृत् ।
दुःस्वप्नहृत् प्रसहनो गुणी नादप्रतिष्ठितः ॥ १८ ॥

किरीटी मौलिभूषावानथवाऽर्जुनरूपधृक् । कुंडली कर्णभूषावान् अथवा शेषरूपधृक् ॥ ६५ ॥ हारी मुक्तादिमालाधृगथवाऽत्यंतसुंदरः । वनमाली दधात्येष मालामापादलंबिनीम् ॥ ६६ ॥ मनोमयः स्वसंकल्पकल्पितैककलेवरः । यदाभिमुख्यराहित्यान्नष्टा संपत्सुरद्विषाम् ॥ ६७ ॥ यत्पादाघातमात्रेण पृथ्वी नम्रा बभूव सः । वैमुख्यहतदैत्यश्रीः पादाहतिजितक्षितिः ॥ ६८ ॥ मुञ्जाख्यहैमतृणजां मौञ्जीं तात्कालिकीं दधत् । सद्योजात-स्वर्णमुञ्जमेखलीति निगद्यते ॥ ६९ ॥ मूर्तिस्फोटनभूकम्पमहोल्का पतनादिभिः । संसूचितान्यरिष्टानि हन्त्यतो दुर्निमित्तहृत् ॥ ७० ॥ दुःस्वप्नमपि सुस्वप्नं कुर्वन् दुःस्वप्नहृन्मतः । भक्तापराधान् क्षमते तेन प्रसहनः स्मृतः ॥ ७१ ॥ विशोकविजिघत्सत्वप्रमुख्यैः स्यात् गुणैर्गुणी[1] । अस्ति प्रणव बिन्द्वन्तेऽर्धचन्द्राद्यक्षराष्टकम् ॥ ७२ ॥ तत्र नादस्तृतीयस्तद्वाच्यो नादप्रतिष्ठितः।

सुरूपः (१००) सर्वनेत्राधिवासो वीरासनाश्रयः ।
पीताम्बरः खण्डरदः खण्डेन्दुकृतशेखरः ॥ १९ ॥

चित्रांकश्यामदशनो भालचन्द्रश्चतुर्भुजः ।
योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ॥ २० ॥

1. सर्वज्ञत्वस्वतन्त्रत्व प्रमुखैर्युग्गुणैर्गुणी ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सुरूपो भूरिलावण्याद्यद्वा तत्त्वनिरूपणात्[1] ॥ ७३ ॥ सर्वनेत्रेषु वसति ''य एषोऽक्षिणि पूरुषः । एष आत्मे''ति वचनात् सर्वनेत्राधिवासकः ॥ ७४ ॥ वामजानूपरिगतदक्षपादोपवेशनम् । वीरासनं तथा स्थानादेष वीरासनाश्रयः ॥ ७५ ॥ निपीतं गगनं येन यस्य पीतोऽथ वा पटः । स तु पीताम्बरः खण्डरदो दन्तार्धधारणात् ॥ ७६ ॥ अर्धचन्द्रं दधन्मूर्ध्ना खण्डेन्दुकृतशेखरः । श्यामैकप्रचुरैश्चित्रैरंकिते रदने सति ॥ ७७ ॥ चित्रांकश्यामदशन इत्येवं स्तूयसे बुधैः । भालचन्द्र इति ख्यातो भाले चन्द्रस्य धारणात् ॥ ७८ ॥ अष्टमीचन्द्रसदृशं ललाटं यस्य सोऽथवा । चत्वारो बाहवो यस्य विग्रहे स चतुर्भुजः ॥ ७९ ॥ योगाचार्यावतारा ये लैंगेऽष्टाविंशतिः स्मृताः । लकुलीशादयस्तत्तद्रूपो योगाधिपो मतः[2] ॥ ८० ॥ प्रणवेनाभिधेयत्वात् तारकस्थ इति स्मृतः । पूर्षु सर्वासु शेतेऽसौ साक्षित्वेनेति पूरुषः ॥ ८१ ॥ यस्य कर्णौ गजस्येव तेनासौ गजकर्णकः ।

---

1. सुरूपादिनामभिश्च ध्येयो नेत्रसुसंस्थितः ॥

2. आद्ये श्वेतः कलौ रुद्रः सुतारो मदनस्तथा ।
सुहोत्रः कङ्कणश्चैव लोका(गा)क्षिर्मुनिसत्तमाः ॥
जैगीषव्यो महातेजा भगवान्दधिवाहनः ।
ऋषभश्च मुनिर्धीमानुग्रश्चात्रिः सुबालकः ॥
गौतमश्चाथ भगवान्सर्ववेदवनमस्कृतः ।
वेदशीर्षश्च गोकर्णो गुहावासी शिखण्डभृत् ॥
जटामाल्यट्टहासश्च दारुको लाङ्गली तथा ।
महाकायमुनिः शूली दण्डी मुण्डीश्वरः स्वयम् ॥
सहिष्णुः सोमशर्मा च ल(न)कुलीशो जगद्गुरुः ।
वैवस्तेऽन्तरे सम्यक्प्रोक्ता हि परमात्मनः ।
योगाचार्यावतारा ये सर्वावर्तेषु सुव्रताः ॥ (लैङ्गे)



https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



गणाधिराजो विजयस्थिरो गजपतिध्वजी।
देवदेवः स्मरप्राणदीपको वायुकीलकः ॥ २१ ॥

विपश्चिद्वरदो नादोन्नादभिन्नबलाहकः।
वराहरदनो मृत्युंजयो व्याघ्राजिनाम्बरः ॥ २२ ॥

अधीयन्ते यत्र काव्ये गणा मयरसादयः ॥ ८२ ॥ गणाधिराजस्तेनासौ राजते प्रतिपाद्यते । भक्तानां विजयस्थैर्य शालित्वाद् विजयस्थिरः ॥ ८३ ॥ गजेन्द्राढ्यो ध्वजोऽस्येति मतो गजपतिध्वजी। देवदेवो वासवादि-दैवतैरप्युपास्यते[1] ॥ ८४ ॥ रुद्रेण दग्धदेहेऽपि प्राणानुज्जीवयन्नयम् । मन्मथस्य स्मरप्राणदीपकत्वेन कीर्त्यते ॥ ८५ ॥ नवद्वारि तनौ प्राणान् स्तंभयन् वायुकीलकः। राज्ञे विपश्चिदाख्याय चतुवर्गं वरं ददत् ॥ ८६ ॥ अग्र्यात्मना त्वं वासिष्ठो(ष्ठे) विपश्चिद्वरदः स्मृतः। अल्पनादैर्महानादैरपि येन विदारिताः ॥ ८७ ॥ मेघाः स कथ्यते नादोन्नादभिन्नबलाहकः । वराहदंष्ट्राशोभाजि-देकदंतविराजितः ॥ ८८ ॥ इतीभास्यपुराणोक्तेर्वराहरदनो मतः । कालमृत्युं प्रमादं वा हरन् मृत्युंजयो मतः ॥ ८९ ॥ प्रमादं वा मृत्युमहं ब्रवीमीति तु भारतात् । वस्ते शार्दूलचर्मेति स्मृतो व्याघ्राजिनांबरः ॥ ९० ॥

इच्छाशक्तिधरो देवत्राता दैत्यविमर्दनः ॥
शंभुवक्त्रोद्भवः शंभुकोपहा शंभुहास्यभूः ॥ २३ ॥

शंभुतेजाः शिवाशोकहारी गौरीसुखावहः ॥
उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः ॥ २४ ॥

जगत्सिसृक्षाधारित्वात् इच्छाशक्तिधरो मतः । देवत्राताऽ-

1. नामान्येतानि नेत्रस्थ ध्यानदेवपराणि च।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



खिलान्देवांस्त्रायते दैत्यजाद्भयात् ॥ ९१ ॥ अत एव हरन् देवरिपून् दैत्यविमर्दनः । शंभुवक्त्रोद्भवो योऽयमवतीर्णः शिवाननात् ॥ ९२ ॥ पितुः क्रोधं हरन्बाललीलाभिः शम्भुकोपहा । अज्ञवत् कतिचित् क्रीडाः कुर्वाणः शंभुहास्यभूः ॥ ९३ ॥ शंभुतेजा इति प्रोक्तः शिवतेजोऽस्ति यस्य सः । महिषादिहतौ भग्नोत्साहाया वर्धयन् बलम् ॥ ९४ ॥ दाक्षायण्याः शिवाशोकहारीति परिगीयते । हर्षं गौर्यास्तपस्यंत्याः कुर्वन् गौरीसुखावहः ॥ ९५ ॥ निजांगोद्वर्तनोत्थेन मलेन प्रतिमामुमा । चक्रे तदंतः प्रविशन् उमाङ्गमलजो मतः ॥ ९६ ॥ चण्डिकाभूयमात्मानं विष्णुब्रह्मादितेजसाम् । आधारत्वादसौ गौरीतेजोभूरिति कथ्यते[1] ॥ ९७ ॥ स्कन्दो गंगोद्भवस्तस्मादभेदात् स्वर्धुनीभवः । स्वर्धुन्या उद्भवो यस्मादिति वा स्वर्धुनीभवः ॥ ९८ ॥

**यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः ।**
**सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्श्रुतिः ॥ २५ ॥**

**ब्रह्मांडकुंभश्चिद्व्योमभालः सत्यशिरोरुहः ।**
**जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ॥ २६ ॥**

यज्ञकायोऽश्वमेधादिमखजातस्वरूपवान् । उच्चैस्तरां वषट्कारोऽस्तु श्रौषड्येयजामहे ॥ ९९ ॥ आश्रावयेत्यादिरूपो महानाद इति स्मृतः । गिरिवर्ष्माद्रयो यस्य विराजो देहतां गताः ॥ १०० ॥ मङ्गलानामनं प्राणं जनयन् स शुभाननः । सर्वात्माऽप्येष सर्वं खल्विदं ब्रह्मेति तु श्रुतेः ॥ १०१ ॥ देहभूता यस्य सर्वदेवात्माऽखिलदेवताः । ब्रह्मैव यस्य मूर्धा स ब्रह्ममूर्धेति कथ्यते ॥ १०२ ॥ कर्णभूता दिशो यस्य कथितः स ककुप्श्रुतिः । ब्रह्मांडखर्परयुगं न्युब्जं सद्यस्य कुम्भति ॥ १०३ ॥ विश्वात्मनः स ब्रह्माण्डकुम्भ इत्यभिधीयते ।

1. **गौरीतेजोभवो ढुण्ढिः दुरासदनिषूदनः ।**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ब्रह्माण्डखर्परांतर्यल्लग्नं खं तच्चिदंबरम् ॥ १०४ ॥ तदस्य ब्रह्मरन्ध्रं चिद्व्योमभालः स उच्यते । सत्यलोको यस्य कैश्यमसौ सत्यशिरोरुहः[1] ॥ १०५ ॥ उन्मेषाज्जायते यस्य निमेषाल्लीयते जगत् । जगज्जन्म-लयोन्मेषनिमेष इति स स्मृतः ॥ १०६ ॥ ऊर्ध्वदक्षिणवामानि नेत्राणि जगदात्मनः । वह्निसूर्येन्दवो यस्य क्रमात्सोऽग्न्यर्कसोमदृक् ॥ १०७ ॥

गिरीन्द्रैकरदो धर्माधर्मोष्ठः सामबृंहितः ।
ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ॥ २७ ॥

कुलाचलांसः सोमार्कघण्टो रुद्रशिरोधरः ।
नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः ॥ २८ ॥

एकः स्थूलो बहिर्दन्तो गिरीन्द्रः कनकाचलः । विराड्रूपजुषो यस्य गिरीन्द्रैकरदो हि सः ॥ १०८ ॥ पापपुण्ये यदोष्ठौ स धर्माधर्मोष्ठ उच्यते । धर्मोत्तरोष्ठो दुरिताधरोष्ठ इति च स्मृतेः ॥ १०९ ॥ यद्बृंहितं सामवेदः स प्रोक्तः सामबृंहितः । सूर्यादयो ग्रहा यस्य कृत्तिकाद्याश्च तारकाः ॥ ११० ॥ मुखांतःस्थाः सूक्ष्मदतो ग्रहर्क्षदशनो हि सः ॥ पुराणन्यायमीमांसाथ-र्वऋग्यजुषादिका ॥ १११ ॥ वाक्तती रसना यस्य स वाणीजिह्व उच्यते ॥[2] नासा यस्य शुनासीरः सोऽयं वासवनासिकः ॥ ११२ ॥ कुलाचलांसो विन्ध्याद्या यस्य स्कन्धतया मताः । कन्धरोर्ध्वं मांसपिण्डावुन्नतौ घण्टिके मते ॥ ११३ ॥ ते रवींदू यस्य सोमार्कघण्टः कथितो हि सः । (गजघण्टायुगुलं शब्दायमानमिति केचित्) यस्य ग्रीवा रुद्र एव स वै रुद्रशिरोधरः ॥ ११४ ॥ गंगाशोणादयो नद्यो नदा यस्य भुजाः स तु ॥ नदीनदभुजः सिन्धुनदीनदति वा भुजः ॥ ११५ ॥ सर्पांगुलीकः शेषाद्या अंगुल्यो यस्य पन्नगाः । ध्रुवाद्या यन्नखास्तारा: स स्मृतस्तारकानखः ॥ ११६ ॥

1. सत्यं यस्य शिरः कैश्यो ह्यसौ सत्यशिरोरुहः ।
2. वाग्रूपा रसना यस्य स वाणीजिह्व उच्यते ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



**भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः ।**
**व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ॥ २९ ॥**

**कुक्षिस्थयक्षगंधर्वरक्षःकिन्नरमानुषः ।**
**पृथ्वीकटिः सृष्टिलिंगः शैलोरुर्दस्रजानुकः ॥ ३० ॥**

भ्रूमध्यसंस्थितकरो भ्रुवोर्घ्राणस्य सन्धिगम् । यत्तत्वं श्रुतिषूक्तं तच्छुण्डादण्डात्म यस्य सः ॥ ११७ ॥ प्रपञ्चभानापह्नुत्या ब्रह्मविद्यैव वै मदः । तेनोद्भिन्नौ कटौ यस्य ब्रह्मविद्यामदोत्कटः ॥ ११८ ॥ यस्य व्योमबिलं नाभिर्व्योमनाभिरसौ मतः । ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम् ॥ ११९ ॥ त्रय्यर्थ एव यच्चित्तं स श्रीहृदय उच्यते । सुमेरुरेव यत्पृष्ठं मेरुपृष्ठः स उच्यते ॥ १२० ॥ जठरांतर्जलस्थानेऽर्णवा इत्यर्णवोदरः । अन्त्राद्यवयवाः कुक्षौ यस्य यक्षादयः स तु ॥ १२१ ॥ कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषः । पृथिव्येव कटिस्थानं यस्य पृथ्वीकटिस्तु सः ॥ १२२ ॥ सृष्टिलिङ्गस्तु यच्छेफस्स्थाने मैथुनजाः प्रजाः । शैलोरुः पर्वता एव यस्योरुस्थानतां गताः ॥ १२३ ॥ दस्रौ यस्याश्विनौ जानू स मतो दस्रजानुकः ।

**पातालजंघो मुनिपात् कालाङ्गुष्ठस्त्रयीतनुः ।**
**ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ॥ ३१ ॥**

**हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः ।**
**सद्भक्तध्याननिगडः पूजावारीनिवारितः ॥ ३२ ॥**

पातालजंघो यज्जंघात्मकं पातालसप्तकम् ॥ १२४ ॥ मुनिपात् मुनिभिः पादलग्नैः पादात्मतां गतैः । कालांगुष्ठो महामृत्युर्यत्पादांगुलितां गतः ॥ १२५ ॥ अनुक्तावयवा यस्य श्रुतयः स त्रयीतनुः । शिंशुमाराभिधं ज्योतिश्चक्रं पुच्छं हि यस्य सः ॥ १२६ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ज्योतिर्मण्डललाङ्गूलो ब्रह्मात्रोक्तं गजाकृति । भक्तानां हृदयान्येवास्यालानं गजबन्धनम् ॥ १२७ ॥ तत्रापगतचाञ्चल्यो हृदयालाननिश्चलः । हृदन्तर्दहराकाशं यस्य क्रीडासरः स तु ॥ १२८ ॥ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः । सर्वगोऽपि परिच्छिन्नो भक्तैर्ध्यानेन यः स तु ॥ १२९ ॥ सद्भक्तध्याननिगडः शृङ्खला ह्यवरोधिका । पूजैव कथिता वारी गजबन्धनशृङ्खला ॥ १३० ॥ संनिरुद्धस्तया देवः पूजावारीनिवारितः ।

**प्रतापी कश्यपसुतो गणपो विष्टपी बली ।**
**यशस्वी धार्मिकः स्वोजाः प्रथमः प्रथमेश्वरः ॥ ३३ ॥**

**चिंतामणिद्वीपपतिः कल्पद्रुमवनालयः ।**
**रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ॥ ३४ ॥**
**तीव्राशिरोधृतपदो ज्वालिनीमौलिलालितः ।**
**नन्दानन्दितपीठश्रीर्भोगदाभूषितासनः ॥ ३५ ॥**

**सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ।**
**तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ॥ ३६ ॥**
**सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रयः ।**
**लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ॥ ३७ ॥**

प्रतापी तापकत्वेन पराक्रमयुतोऽथवा ॥ १३१ ॥ कश्यपस्य मुनेः कुक्षाववतीर्ण इति स्मृतः । कथा पुराणे गाणेशे स कश्यपसुतो मतः ॥ १३२॥ गणपोऽध्वर्युहोत्रादीन् पातीति चतुरो गणान् । विष्टपी भुवनाधारो बलसामान्यवान् बली ॥ १३३ ॥ यशस्वी पुण्यकीर्त्याढ्यो धार्मिको धर्मवर्धकः । अष्टमो धातुरोजः स्यात् स्वोजास्तद्यस्य शोभनम् ॥ १३४ ॥ प्रथमः सर्वकार्यादौ पूज्यत्वात्सर्वदेहिनाम् । प्रथमा

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ब्रह्मविष्ण्वीशास्तदीशः प्रथमेश्वरः ॥ १३५ ॥ चिन्तामणिद्वीपपूर्वं रत्नसिंहासनावधि। यस्योपभोग्यं स प्रोक्तः चतुर्भिरिह नामभिः ॥ १३६ ॥ तीव्रा च ज्वालिनी नन्दा भोगदा कामदायिनी। उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ १३७ ॥ पत्राष्टके कर्णिकायां सन्त्येताः पीठशक्तयः। नवैताः पद्मसहिताः कथिता दशनामभिः ॥ १३८ ॥ द्विद्विस्वरककिञ्जल्कपराप्रासादकर्णिकम् ॥ १३९ ॥ कादिवर्गाष्टकदलं मातृकापद्ममुच्यते ॥ १४० ॥ तत्रस्थो लिपिपद्मा सनाधार इति कथ्यते। कर्णिकोपर्युपर्यर्केन्द्वग्न्याख्यं तेजसां त्रयम् ॥ १४१ ॥ आस्तीर्णं तत्र निवसन् वह्निधामत्रयाश्रयः।

**उन्नतप्रपदो गूढगुल्फः संवृत(त्त)पार्ष्णिकः।**
**पीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥ ३८ ॥**

**निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः।**
**पीनस्कन्धः कम्बुकण्ठो लंबोष्ठो लंबनासिकः ॥ ३९ ॥**

**भग्नवामरदस्तुङ्गसव्यदन्तो मंहाहनुः।**
**ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ॥ ४० ॥**
**स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरङ्कुशः।**
**सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥ ४१ ॥**

**सर्पकोटीरकटकः सर्पग्रैवेयकांगदः।**
**सर्पकक्षोदराबंधः सर्पराजोत्तरीयकः ॥ ४२ ॥**

पादाग्रे उन्नते यस्य चोन्नतप्रपदो मतः ॥ १४२ ॥ कूर्मपृष्ठसमाकारभाव औन्नत्यमीरितम्। पादमूलगतावस्थिग्रन्थी आच्छादितौ यदि ॥ १४३॥ नोन्नतत्वेन दृश्येते गूढगुल्फस्तदोच्यते। गुल्फाधोभागयोर्मांसपूर्त्या संवृत(त्त)पार्ष्णिकः ॥ १४४ ॥ पिण्डिके

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



मांसले यस्य पीनजङ्घः स कथ्यते । जङ्घोरुसन्धियुग्मं चेदस्पष्टं श्लिष्टजानुकः ॥ १४५ ॥ स्थूलोरुरूरुयुगलं मांसलं यस्य स स्मृतः । आनम्रो न कटिर्यस्य स प्रोक्तः प्रोन्नमत्कटिः ॥ १४६ ॥ गाम्भीर्यतो निम्ननाभिः स्थूलकुक्षिः पिचण्डिलः । व्यूढोरस्कः पीनवक्षा आजानुत्वाद्बृहद्भुजः ॥ १४७ ॥ पीनस्कन्धो मांसलांसः कम्बुकण्ठोऽब्जकन्धरः । वलित्रितयसंयुक्तः कण्ठो यस्य स कीर्तितः ॥ १४८ ॥ लम्बमानाधरोष्ठत्वाल्लम्बोष्ठः स्याद्गजाननः । शुण्डादण्डो लम्बमानो यस्यासौ(धो) लम्बनासिकः ॥ १४९ ॥ भग्नवामरदो यस्य च्छिन्नाग्रो वामदन्तकः । दन्तोऽस्य दक्षिणस्तुङ्गसव्यदन्तो यदुन्नतः ॥ १५० ॥ कपोलपरभागस्य महत्त्वेन महाहनुः । गजस्य यादृशं वक्त्रं तद्योग्यपरिमाणकम् ॥ १५१ ॥ न लोचनमनेनासौ ह्रस्वनेत्रत्रयः स्मृतः । यस्य शूर्पाकृती कर्णौ शूर्पकर्णः स उच्यते ॥ १५२ ॥ घनत्वादतिकाठिन्यान्मूर्ध्नो निबिडमस्तकः । स्तबकाकारकुम्भाग्रो गुच्छोपमशिरोञ्चलः ॥ १५३ ॥ रत्नोत्कीर्णकिरीटाढ्यो रत्नमौलिरुदीरितः । कुम्भयोरंकुशास्पर्शात्स्वातन्त्र्याद्वा निरङ्कुशः ॥ १५४ ॥ सर्पहारकटीसूत्रयज्ञसूत्राणि यस्य सः । सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् । सर्पकोटीरकटकः सर्पौ यन्मौलिकंकणे ॥ १५५ ॥ सर्पात्मकण्ठदोर्भूषः सर्पग्रैवेयकांगदः । कक्षा च कटिबन्धाख्या कुक्ष्याबन्धश्च पन्नगौ ॥ १५६ ॥ यस्यासाते सर्पकक्षोदराबन्धः स कीर्तितः । सोत्तरीयो वासुकिना सर्पराजोत्तरीयकः ॥ १५७ ॥

**रक्तो रक्तांबरधरो रक्तमाल्यविभूषणः ।**
**रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ॥ ४३ ॥**
**श्वेतः श्वेतांबरधरः श्वेतमाल्यविभूषणः ।**
**श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥ ४४ ॥**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सर्वावयवसंपूर्णसर्वलक्षणलक्षितः ।
सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ॥ ४५ ॥

रक्तः कान्त्या वस्त्रमाल्यभूषादृक्करतालुनाम् । ओष्ठाग्रस्य च शोणत्वान्नामभिः पञ्चभिः स्तुतः ॥ १५८ ॥ विद्याकामादिभिर्ध्येयं रूपं बोधयितुं पुनः । प्रवृत्तं श्वेत इत्यादि स्पष्टार्थं नामपञ्चकम् ॥ १५९ ॥ सर्वांगेषु समुद्रोक्तलक्षणैः पूरणादयम् । सर्वावयवसम्पूर्णसर्वलक्षणलक्षितः ॥ १६० ॥ सर्वाभरणशोभाढ्योऽलङ्कारालङ्कृतत्वतः । लावण्याख्याङ्गकान्त्याढ्यः सर्वशोभासमन्वितः ॥ १६१ ॥

सर्वमंगलमांगल्यः सर्वकारणकारणम् ।
सर्वैककरः शार्ङ्गी बीजापूरी गदाधरः ॥ ४६ ॥

इक्षुचापधरः शूली चक्रपाणिः सरोजभृत् ।
पाशी धृतोत्पलः शालिमंजरीभृत् स्वदंतभृत् ॥ ४७ ॥
कल्पवल्लीधरो विश्वाभयदैककरो वशी ।
अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ॥ ४८ ॥

पूर्णपात्री कंबुधरो विधृतालिसमुद्गकः ।
मातुलिंगधरश्चूतकलिकाभृत् कुठारवान् ॥ ४९ ॥
पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ।

सर्वमङ्गलमाङ्गल्यः शुभानां च शुभावहः । सर्वस्य जगतोऽव्यक्तं परमाण्वादि कारण्म् ॥ १६२ ॥ तेषामपि च हेतुत्वात् सर्वकारणकारणम् सर्वैककरः सर्वं धत्ते मुख्यः करोऽस्य यत् ॥ १६३ ॥ शृंगोत्थं धनुः शार्ङ्गं तद्वान् शाङ्गर्यथ नामभिः । दशभिर्दशहस्तस्यायुधान्यत्र गणेशितुः ॥ १६४ ॥ मातुलिङ्गं

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



गदामिक्षुधनुः शूलं सुदर्शनम्। पद्म(शङ्ख) पाशोत्पलव्रीहिकणिशानि रदार्धकम् ।। १६५ ।। अथ मन्त्रान्तराङ्गानि ध्याननामायुधान्यपि। साकल्येन विनिर्देष्टुं नामान्यत्र त्रयोदश ।। १६६ ।। कल्पवल्लीधरः कल्पलतां धत्ते कराम्बुजे। विश्वस्माद(स्याप्य)भयं धत्ते यस्य मुख्यः करः स तु ।। १६७ ।। महागणपतिर्विश्वाभयदैककरः स्मृतः। वशेऽस्य विश्वं सर्वस्य वशीति श्रुतितो वशी ।। १६८ ।। अकारादिक्षकारान्तमातृकात्मकमालिका । उक्ताक्षमाला तद्धारी त्वक्षमालाधरो मतः ।। १६९।। तर्जन्यंगुष्ठसंयोगो ज्ञानमुद्रा हृदि स्थितः। तादृशैककरो ज्ञानमुद्रावानिति कथ्यते ।। १७० ।। मुदं गिरंति यन्मन्त्रसाधनान्युरुबुध्नकम्। मुसलं वायुधं यस्य स देवो मुद्गरायुधः ।। १७१ ।। पूर्णपात्रं याज्ञिकेषु प्रसिद्धं तद्युतो मखः। यद्वा सुधाघटयुतः पूर्णपात्रीति कीर्त्यते ।। १७२ ।। शङ्खस्य धारणाद्धस्ते देवः कंबुधरः स्मृतः। मद्यसंपुटकं धत्ते भृंगाणां संपुटायते ।। १७३ ।। यो मदस्तं कटे धत्ते विधृतालिसमुद्गकः। बीजापूरफलं चाम्रमञ्जरीं च करे दधत् ।। १७४ ।। मातुलिङ्गधरश्चूतकलिकाभृच्च कथ्यते। योगिज्ञानं केवलाख्यं कुठारं तस्य साक्ष्यसौ ।। १७५ ।। ज्ञानार्थकात्तु शत्रंताद्धातोः सिद्धः कुठारवान्। शुंडाग्रस्थस्वर्णकुम्भपूर्णरत्नप्रदानतः ।। १७६ ।। पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः।

**भारतीसुंदरीनाथो विनायकरतिप्रियः।। ५० ।।**
**महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः।**
**रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः। ५१ ।।**
**महीवराहवामांगो रतिकंदर्पपश्चिमः।**
**आमोदमोदजननः सप्रमोदप्रमोदनः ।।५२ ।।**

**समेधितसमृद्धिश्रीः ऋद्धिसिद्धिप्रवर्तकः।**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



दत्तसौमुख्यसुमुखः कांतिकन्दलिताश्रयः ॥ ५३ ॥
मदनावत्याश्रितांघ्रिः कृत्तदौर्मुख्य दुर्मुखः ।
विघ्नसंपल्लवोपघ्नः सेवोन्निद्रमदद्रवः ॥ ५४ ॥

विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः ।
तीव्राप्रसन्ननयनो ज्वालिनीपालनैकदृक् ॥ ५५ ॥
मोहिनीमोहनो(३००) भोगदायिनीकांतिमंडितः ।
कामिनीकांतवक्त्रश्रीरधिष्ठितवसुंधरः ॥ ५६ ॥

वसुधारामदोन्नद्धमहाशंखनिधिप्रभुः ।
नमद्वसुमतीमौलिमहापद्मनिधिप्रभुः ॥ ५७ ॥

भारतीसुंदरीनाथो ब्रह्मविष्णु-शिवात्मकः ॥ १७७ ॥ लक्ष्मीवाचकमीकारं प्रश्लिष्यार्थोऽयमूह्यताम् । विनायका ग्रहाः केचित्तैः सह क्रीडनं प्रियम् ॥ १७८ ॥ पक्षिराजेन वाऽस्येति (शिखिना) विनायकरतिप्रियः । महालक्ष्मीसिद्धलक्ष्म्यावस्य द्वे वल्लभे इति ॥ १७९ ॥ महालक्ष्मी-प्रियतमः सिद्धलक्ष्मीमनोरमः । अथ नामचतुष्केन देवस्यावरणात्मिकाः ॥ १८० ॥ प्राच्यामवाच्यां चोदीच्यां प्रतीच्यां च स्थिताः क्रमात् । रमादामोदरौ गौरीशङ्करौ भूमिसूकरौ ॥ १८१ ॥ रतिमाराविति द्वन्द्वदेवताः कीर्तिताः स्फुटाः । ततः षण्मिथुनीभूत्वा षडस्रावरणे स्थिताः ॥ १८२ ॥ छन्दोवशादक्रमेण प्रोक्ता द्वादशनामभिः । ऋद्ध्यामोदौ समृद्धिप्रमोदौ च मिथुने उभे ॥ १८३ ॥ सुमुखः कांतिरित्येकं दुर्मुखो मदनावती । विघ्नो मदद्रवेत्येकं विघ्नकृद्द्राविणीति च ॥ १८४ ॥ आमोदं मोदयत्येष प्रमोदस्य प्रमोदनः । सहितश्च समृद्ध्या श्रीरनेनैवाभिवर्धिता ॥ १८५ ॥ ऋद्धिदेव्यां स्थिताः सिद्धीः प्रवर्तयति चाप्यसौ । सुमुखः स्वेषु सौमुख्यं यत्प्रसादात्प्रयच्छति ॥ १८६ ॥ यद्वशादाश्रयः कान्तेर्देव्या अङ्कुरितोऽभवत् । धृतवान्

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



मदनावत्या दौर्मुख्यं दुर्मुखे स्थितम् ।। १८७ ।। कृत्तं छिन्नमनेनैव, सम्यग्विघ्नस्य पल्लवः । विस्तारस्तस्य चोपघ्न आश्रयो यस्य सेवने ।। १८८ ।। उन्निद्रानलसैवास्ते देवी नाम्ना मदद्रवा । भक्त्या विघ्नकृतोऽधीने यस्य तच्चरणाम्बुजे ।। १८९ ।। द्राविणीसंज्ञया शक्त्या सत्कृतोऽयं गणाधिपः । अथ नामानि षट् प्राह षड्भिस्तीव्रादिशक्तिभिः ।। १९० ।। तीव्रायां यस्य नयने प्रसादपिशुनेक्षणे । ज्वालिन्या रक्षणे मुख्या यद्दृष्टिर्मोहिनीमपि ।। १९१ ।। यो मोहयति तस्मै श्रीगणाधिपतये नमः । त्वं भोगदायिनीशक्तेः कान्त्या मण्डितपादुकः ।। १९२।। कामिन्याः शोभने (सुन्दरे) वक्त्रे या शोभा तत्स्वरूपकः । वसुन्धराभिधा देवी जाता त्वत्तः प्रतिष्ठिता ।। १९३ ।। अथ द्वे नामनी प्राह मिथुनद्वयबोधिके । महाशङ्खमहापद्माभिधे द्वे निधिदैवते ।। १९४ ।। वसुधारा वसुमतीत्येते द्वे तत्तदंगने ।

**सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः ।**
**ईशानमूर्धा देवेन्द्रशिखा पवननंदनः ।। ५८ ।।**

**अग्रप्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित् ।**
**ऐरावतादिसर्वाशावारणावरणप्रियः ।। ५९ ।।**
**वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः ।**
**जयाजयपरीवारो विजयाविजयावहः ।। ६० ।।**

**अजितार्चितपादाब्जो नित्यानित्यावतंसितः ।**
**विलासिनीकृतोल्लासः शौंडीसौंदर्यमंडितः ।। ६१ ।।**
**अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः ।**
**इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ।। ६२ ।।**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सुभगासंश्रितपदो ललितालिताश्रयः ।
कामिनीकामनः काममालिनीकेलिलालितः ॥ ६३ ॥
सरस्वत्याश्रयो गौरीनंदनः श्रीनिकेतनः ।
गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ॥ ६४ ॥

नलिनीकामुको वामारामो ज्येष्ठामनोरमः ।
रौद्रीमुद्रितपादाब्जो हुंबीजस्तुंगशक्तिकः ॥ ६५ ॥

गणेशादि-स्वनाथान्तैः सम्यगाराधितो यतः ॥ १९५ ॥ सर्वसद्गुरुसंसेव्य इति तेन निगद्यसे । गार्हपत्यादयः पञ्च शोचिष्केशास्तदींयहृत् ॥ १९६ ॥ आश्रयो यस्य तद्धयेयः शोचिष्केश-हृदाश्रयः । ईशानस्यापि मूर्धा त्वं देवेन्द्रस्यापि वै शिखा ॥ १९७ ॥ शक्रशङ्करयोर्मान्य इति नामद्वयाशयः । जीवनान्नान्य आनन्दस्तत्प्राण-पवनात्मकः ॥ १९८ ॥ प्राणस्यापि च यः प्राणः स स्यात्पवननन्दनः । अग्रं सूक्ष्मं चोत्तमं वा प्रत्यग्रं जीर्णतोज्झितम् ॥ १९९ ॥ तादृग्लोचनवानग्रप्रत्यग्रनयनो मतः । अस्त्रविद्याप्रवक्तृत्वाद्दिव्यास्त्राणां प्रयोगवित् ॥ २०० ॥ क्रीडयैवावृणोत्येष युगपद्दिग्गजानपि । ऐरावतादिसर्वाशावारणावरणप्रियः ॥ २०१ ॥ वज्रादीनि यदस्त्राणि तैरिन्द्रादिभिरावृतः । वज्राद्यस्त्रपरीवार आयुधावरणोऽपि वा ॥ २०२ ॥ गणाश्चण्डादयो यद्वा ये प्रचण्डा गणेष्वपि । तेषां बलप्रदातृत्वाद्गणचण्डसमाश्रयः ॥ २०३ ॥ अथाष्टनामभिः प्राह प्राणशक्त्याद्यभिन्नताम् । जया च विजया पश्चादजया चापराजिता ॥ २०४ ॥ नित्या विलासिनी शौण्डी ततोऽनन्ताथ मङ्गला । प्राणशक्त्यादिदेवीनामेताः स्युः पीठशक्तयः ॥ २०५ ॥ जया चाप्यजयेत्येतत्समाहारो जयाजयं । ते एवास्य परीवारो द्वितीयं नाम तु स्फुटम् ॥ २०६ ॥ तृतीयनामन्यजितापदेनोक्ताऽपराजिता । सप्तमे

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



नाम्न्यनंताया अनन्तसुखदायकः ॥ २०७ ॥ शोभना मङ्गला यस्मिंस्तत्तु पीठं सुमङ्गलम् । तादृक् सुमङ्गलं यस्मात् सुमङ्गलसुमङ्गलः ॥ २०८ ॥ या ब्रह्मण्युद्गता वृत्तिः स्वर्गादावीक्षणात्मिका । ज्ञानेच्छाकृतिरूपा सेत्यस्माभिः श्रुतियुक्तिभिः ॥ २०९ ॥ वामकेश्वरतन्त्रस्य व्याख्यायां प्रतिपादितम् । तादृग्वृत्तियुतं ब्रह्मनाम्नैकेनेह कथ्यते ॥ २१० ॥ इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः । सैव वृत्तिर्भिद्यमाना तत्तद्धर्मैकयोगतः ॥ २११ ॥ सुभगादिकरौद्र्यन्तनामभागित्यपीरितं । तत्र या सुभगादेवी तया सेव्यांघ्रिरप्यसौ ॥ २१२ ॥ गणेशसुंदरीमन्त्राल्ललितालिताश्रयः । कामिनी या कामकला कामेशी काममालिनी ॥ २१३ ॥ सरस्वत्याश्रयादीनि त्रीणि स्पष्टार्थकान्यथ । गणक्रीडादिगुरुभिर्ग्रन्थादौ प्रतिपादितैः ॥ २१४ ॥ गोपितत्वात्पदस्यास्य गुरुगुप्तपदो मतः । वाचा सिद्ध्यति यद्धत्त्या स वाचासिद्ध इष्यते ॥ २१५ ॥ वागीश्वरी तु नकुली नलिनी तु सुरापगा । तयोः पतिः कामुकोऽथ वामा ज्येष्ठा च रौद्रिका ॥ २१६ ॥ ब्रह्मविष्णुहरा एव शक्तिरूपधरा यदि । वामैव यस्य रामा स ज्येष्ठा यस्य मनोरमा ॥ २१७ ॥ रौद्रीमुद्रितपादाब्जस्तदञ्जलिधृताङ्घ्रिकः । हुङ्कार एव चरमो वक्रतुण्डषडक्षरे ॥ २१८ ॥ बीजं सर्वपुमर्थानां हुंबीजस्तेन गीयसे। तत्रत्य एव तुङ्कारोऽष्टाविंशत्यर्णगं च गम् ॥ २१९ ॥ शक्तीस्ताः सकलौन्नत्यशक्त्याऽवन् तुङ्गशक्तिकः ।

**विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ।**
**अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥ ६६ ॥**

**उच्छिष्टगण उच्छिष्टगणेशो गणनायकः ।**
**सार्वकालिकसंसिद्धिर्नित्यशैवो दिगंबरः ॥ ६७ ॥**

हिरण्यगर्भो विश्वादिस्तदुत्पादनपालने ॥ २२० ॥ यस्मात्

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



स्यातां स विश्वादिजननत्राण उच्यते। जननत्राणवच्छक्तो होमे कवलने प्रियः ॥ २२१ ॥ स्वाहेति मन्त्रशक्तिर्या स स्वाहाशक्तिरीरितः ॥ मन्त्रे मृत्युञ्जये सौरे स इत्यर्णः सकीलकः ॥ २२२ ॥ वाचको यस्य मन्त्राङ्गसाहित्याद्वा सकीलकः। सुरासुधेक्षुसिन्धुस्थो यस्तत्पानरतश्च सः ॥ २२३ ॥ अमृताब्धिकृतावासो मदघूर्णितलोचनः। उच्छिष्टगण उत्कृष्टा गणाः शिष्टाश्च यस्य सः ॥ २२४ ॥ उच्छिष्टं नाम रूपं चेत्याद्यृचः सप्तविंशतिः। आथर्वणा यं वदन्ति स गणेशो न चापरः ॥ २२५ ॥ मोदकं भक्षयन्देवो ध्येयो मन्त्रो नवाक्षरैः। साधकेनेति वोच्छिष्टगणेश इति कथ्यसे ॥ २२६ ॥ गणनं गुणसंख्यानमयते गणनायकः। सार्वकालिकसंसिद्धिः शाश्वत्यो यस्य सिद्धयः ॥ २२७ ॥ नित्यशैवः कदाप्यस्य शिवभावनया यतः। दिशमंबरयत्यावृणोतीति स दिगंबरः ॥ २२८ ॥

**अनपायोऽनंतदृष्टिरप्रमेयोऽजरामरः ॥**
**अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतमक्षरम् ॥ ६८ ॥**

**अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः।**
**अमोघसिद्धिरद्वैतमघोरोऽप्रमिताननः ॥ ६९ ॥**

अनपगतशुभावहविधिरनपायो नाशविरहाद्वा। अगणित-चक्षुर्नाशविरहितज्ञानोऽप्यनन्तदृष्टिरिति ॥ २२९ ॥ ज्ञानेन्द्रिय-वाङ्मनसागम्यत्वादप्रमेय इति ॥ विजरो विमृत्युरित्याम्नानादजरामरो गदितः ॥ २३० ॥ आविद्यकधर्मततिभिरकलुषितत्वादनाविलोऽपि भवान् ॥ अप्रतिरथ इति गदितो नास्ति यतस्ते प्रतिद्वंद्वी ॥ २३१ ॥ च्युतिराहित्यादच्युतनामा नारायणादभेदाद्वा। पीयूषं मोक्षो (ऐक्षवं) वा त्वमेव भगवंस्ततोऽस्यमृतम् ॥ २३२ ॥ अक्षरमश्नोतेर्व्याप्त्यर्थादथवा क्षयाभावात्। वेदाननुमततर्कागम्यत्वादप्रतर्क्यस्त्वम् ॥ २३३ ॥ न

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



क्षतिरपि न च वसतिर्जेतुमशक्योऽक्षयोऽजय्यः । जगदाधारस्य तवाधारो नास्तीत्यनाधारः ॥ २३४ ॥ आमयमालिन्याभ्यामगृहीतत्वादनामयोऽस्यमलः । सिद्धिर्भवत्यर्थवती न मोघा भक्तस्य तेन त्वममोघसिद्धिः । द्वैतप्रपञ्चोपशमाच्चतुर्थमद्वैतमित्युच्यस ईशरूपः ॥ २३५ ॥ अघोरमूर्तिः शिव इत्यघोरो नमज्जनानामभयङ्करो वा । असंख्यवक्त्रोऽस्यमितानि यस्मात् सञ्जीवनान्यप्रमिताननस्त्वम् ॥ २३६ ॥

**अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ।**
**आधारपीठ आधार आधाराधेयवर्जितः ॥ ७० ॥**
**आखुकेतन आशापूरक आखुमहारथः ।**
**इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ॥ ७१ ॥**

भक्ततोषार्थमाकाराः सगुणाः संति यद्यपि । तथापि त्वमनाकारः परमार्थदृशा विभो ॥ २३७ ॥ भूवारितेजोमरुतां बलानि संस्तंभनक्लेदनदाहशोषाः । त्वयि क्षमास्तेन भवन्ति तेन त्वमब्धिभूम्यग्निबलघ्न उक्तः ॥ २३८ ॥ सच्चित्सुखैकमयता तु तव स्वरूपलक्ष्म प्रपञ्चकलना तु तटस्थलक्ष्म । न व्यज्यते तदुभयं हि बहिर्मुखानां अव्यक्तलक्षण इति प्रथितोऽसि तेन ॥ २३९ ॥ आङ् व्यापनं वक्ति धरैव धारं शिवावधि क्ष्मावधितत्त्वपङ्क्तेः । षट्त्रिंशतः पीठ इवासनं त्वमाधारपीठोऽसि ततो नमस्ते ॥ २४० ॥ अकारो वासुदेवः स्यादाकारस्तु पितामहः । तावुभौ यो धारयति स आधारो गणाधिपः ॥ २४१ ॥ सर्वाधारस्याधारान्तरविरहादतात्त्विकत्वाच्च । एषामाधेयानामाधाराधेयवर्जितोऽसि ततः ॥ २४२ ॥ आखुवाहं ध्वजीकुर्वन् दिशस्तृष्णां च पूरयन् । आखुकेतन आशापूरक आखुमहारथः ॥ २४३ ॥ इक्षुशब्दादिमं नामयुगलं प्रकटार्थकम् ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ।
इन्द्रगोपसमानश्रीरिन्द्रनीलसमद्युतिः ॥ ७२ ॥

इन्दीवरदलश्याम इन्दुमण्डलनिर्मलः ।
इध्मप्रिय इडाभाग इराधामेन्दिराप्रियः ॥ ७३ ॥

इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतेप्सितः ।
ईशानमौलिरीशान ईशानसुत ईतिहा ॥ ७४ ॥

इक्षुचापातिरेकश्रीर्मदनाधिककान्तिमान् ॥ २४४ ॥ चापदेवतया मूर्तिमत्या पञ्चशरेण वा । नित्यं यः सेव्यते सोऽयमिक्षुचापनिषेवितः ॥ २४५ ॥ एतस्यैवारक्तरूपं भास्वराभास्वरासिते । शुक्लं च भास्वरं ध्येयं कामनाभेदतो जनैः ॥ २४६ ॥ युगभेदेन भेदस्तत्पुराणेऽपि निरूपितः । इति ध्वनयितुं नामचतुष्कं प्रकटार्थकम् ॥ २४७ ॥ श्रौतस्मार्ताग्निरूपत्वाद्भवानिध्मप्रियो मतः । इडा मही हविश्शेषो गौश्च भागस्तवैव यत् ॥ २४८ ॥ ऋत्विग्याज्यादिरूपत्वादिडाभाग इतीर्यसे ॥ इरेति पृथ्वी तद्धामा तदन्तर्यमयन् स्थितः ॥ २४९ ॥ यः पृथिव्यां तिष्ठतीति बृहदारण्यकश्रुतेः । लक्ष्मीपूज्योऽथवा विष्णुरूपत्वादिन्दिराप्रियः ॥ २५०॥ इक्ष्वाकुः कटुतुम्बी तत्तुल्यप्रत्यूहनाशनात् । इक्ष्वाकुविघ्नविध्वंसी राज्ञो वा विघ्ननाशनात् ॥ २५१ ॥ इतिकर्तव्यताशब्दः क्रत्वंगस्तोमवाचकः । तामपेक्ष्य ददत्कामानितिकर्तव्यतेप्सितः ॥ २५२ ॥ नरभूतसुरेशाद्या ईशाना बहवोऽमिताः । तेषामेषोऽधिको मौलिरमितैश्वर्ययोगतः ॥ २५३ ॥ अनयन् जीवयन्नीशानीशान इति कीर्त्यसे । ईशानेन सुतः सोमरूपस्तस्य सुतोऽथवा ॥ २५४ ॥ अतिवृष्टिमनावृष्टिं मूषकान् शलभान् शुकान् । स्वचक्रं परचक्रं च विनिघ्नन्नीतिहा मतः ॥ २५५ ॥



https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



**ईषणात्रयकल्पान्त ईहामात्रविवर्जितः ।**
**उपेन्द्र(४००) उडुभृन्मौलिरुण्डेरकबलिप्रियः ॥ ७५ ॥**

**उन्नतानन उत्तुंग उदारत्रिदशाग्रणीः ।**
**ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥ ७६ ॥**

**ऋग्यजुःसामसंभूतिः ऋद्धिसिद्धिप्रवर्तकः ।**
**ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः ॥ ७७ ॥**

लोकपुत्रधनेच्छानां तिसॄणां प्रलयात्मकः । ईषणात्रयकल्पान्तो नृणां वैराग्यदायकः ॥ २५६ ॥ निश्चेष्टचित्स्वरूपत्वादीहामात्रविवर्जितः । वामनेन सहाभेदादुपेंद्र इति कीर्तितः ॥ २५७ ॥ बिभ्रत्युडूनि या द्यौः सा यस्य विश्वात्मनः शिरः । स त्वमेवोडुभृन्मौलिर्द्यां मूर्धानमिति श्रुतेः ॥ २५८॥ यद्वा चंद्रावतं सत्वादुडुभृन्मौलिरुच्यसे । उंडेरकाः पूपभेदा वर्तुलाकृतयोऽल्पकाः ॥ २५९ ॥ उपहारास्तवेष्टा इत्युंडेरकबलिप्रियः । उत्कृष्टानामजादीनां प्राणनादुन्नताननः ॥ २६० ॥ तुङ्गा नाम नदी काचित् वराहवपुषस्तव । दंष्ट्राया उद्गता तस्माद्भवानुत्तुंग ईरितः ॥ २६१ ॥ उदारो दातृमहतोस्त्रिदशो देव उच्यते । महादेवादपि श्रेष्ठ उदारत्रिदशाग्रणीः ॥ २६२॥ ऊर्जस्वानपि तेजोवानत एव मदोदकम् । उष्णं स्रवति गंडाभ्यां तेनोष्मलमदो भवान् ॥ २६३ ॥ ऊहो वितर्कस्तत्त्वस्यापोह- स्तात्त्विकबाधनम् । ताभ्यां दुरासदोऽप्राप्य ऊहापोहदुरासदः ॥ २६४ ॥ ऋग्यजुःसामसंभूतिर्यस्य निःश्वसितं त्रयी । राज्याणिमादिदातृत्वादृद्धिसिद्धिप्रवर्तकः ॥ २६५ ॥ दृश्यते त्वग्र्यया बुद्ध्येत्युक्तेर्यद्धिमलं मनः। तद्ग्राह्य ऋजुचित्तैक सुलभस्तेन गीयसे ॥ २६६ ॥ पुत्रीयन्ति यियक्षन्ति वेदानिच्छन्ति ये द्विजाः । तत्कामनापूरकत्वादृणत्रयविमोच कः ॥ २६७ ॥

**लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम् ।**
**लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ॥ ७८ ॥**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



एकारपीठमध्यस्थ एकपादकृतासनः ।
एजिताखिलदैत्यश्रीरेधिताखिलसंश्रयः ॥ ७९ ॥

ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः ।
ऐरंमदसमोन्मेष ऐरावतनिभाननः ॥ ८० ॥

ॐ कारवाच्य ॐकार ओजस्वानोषधीपतिः ।
औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनिस्वनः ॥ ८१ ॥

अङ्कुशः सुरनागानामङ्कुशः सुरविद्धिषाम् ।
अःसमस्तविसर्गान्तपदेषु परिकीर्तितः ॥ ८२ ॥

लुप्तशब्दादिकं नामत्रितयं प्रकटार्थकम्[1] । दंशलूतादयो रोगा आंतरा बहिरामयाः ॥ २६८ ॥ स्फोटाद्यास्तान्निहंतीति लूताविस्फोट-नाशनः । एकारपीठमध्यस्थत्रिकोणांतस्स्थविंदुगः ॥ २६९ ॥ काश्या-मेकपदा तिष्ठन्नेकपादकृतासनः । एजिताखिलदैत्यश्रीः कंपितासुरसंपदा ॥ २७० ॥ स्वाश्रिता वर्धिता येनेत्येधिताखिल-संश्रयः ॥ २७० ॥ ऐश्वर्यनिधिरैश्वर्यं भक्तेषु निदधाति यः ॥ २७१ ॥ ईश्वरेषु यदैश्वर्यं संपत्तिः सा त्वमेव हि । एषाऽस्य परमा संपदिति बोधयति श्रुतिः ॥ २७२ ॥ दत्से सुतादीन्स्वर्गं चेत्यैहिकामुष्मिकप्रदः[2] । विद्युत्तुल्यस्तवोन्मेषः क्षणाद्भासि न भासि च ॥ २७३ ॥ ऐरंमदसमोन्मेषः स्वार्थे

1. भक्तविघ्ननाशकत्वाद् भवान्विघ्नपतिः प्रभुः ।
लुप्तविघ्नः स्वभक्तानामित्येवं परिगीयसे ।
दैत्यसामर्थ्यहननात् लुप्तशक्तिः सुरद्विषाम् ।
तवोपासनहीनानां हरसि त्वं श्रियं विभुः ।
लुप्तश्रीर्विमुखार्चनां इत्येवं गीयसे क्रमात् ॥ (ब्रह्मा)

2. इह पुत्रादिसंपत्तीः स्वर्गवासं परत्र च ।
प्रयच्छसि भवान् ख्यातः ऐहिकामुष्मिकप्रदः ॥) (ब्रह्मा)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ज्ञेयोऽणिरंमदात् । ऐरावतसमास्यत्वादैरावतनिभाननः ॥ २७४ ॥ क्लेशादि रहितमीश्वरमुक्त्वा तस्य वाचकः प्रणवः । इति योगशास्त्रसूत्रे कथनादोंकारवाच्यस्त्वम् ॥ २७५ ॥ ॐ इति शब्दोऽपि त्वं भेदाभावेन वाच्यवाचकयोः[1] । अत एव त्वयि वाच्योङ्कारोऽपि प्रत्ययो युक्तः[2] ॥ २७६ ॥ ओजोऽष्टमधातुरिति प्रोक्तं यद्वेदभाष्यकृता । शौर्योत्कर्षनिदानं तेजस्तद्वांस्त्वमोजस्वान्[3] ॥ २७७ ॥ ओषधीपतिरौदार्यनिधि-रित्याह्वयौ स्फुटौ[4] ॥ औद्धत्यमुद्धतत्वं यत् स्वभक्तानुजिघृक्षया ॥ २७८ ॥ स्वोत्कर्षद्योतनं तत्र श्रेष्ठ औद्धत्यधुर्यकः । बृंहितं यस्य सर्वोच्चं स स्यादौन्नत्यनिस्वनः ॥ २७९ ॥ अंकुशः सुरनागानां त्रैलोक्यस्य नियामकः । ऊर्ध्वं सुरा अधो नागा मर्त्यलोकोपलक्षणं ॥ २८० ॥ द्विषः सुराणां च विदां सुष्ठु सम्यग् रविद्विषां । निग्राहकत्वान्निर्दिष्टोऽस्यङ्कुशः सुरविद्विषाम् ॥ २८१ ॥ अकाराद्येकपंचाशद्विसर्गन्तार्णबोधितः । अः समस्तविसर्गान्तपदेषु परिकीर्तितः ॥ २८२ ॥

**कमंडलुधरः कल्पः कपर्दी कलभाननः ।**
**कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ॥ ८३ ॥**

**कदंबगोलकाकारः कूष्माण्डगणनायकः ।**
**कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ॥ ८४ ॥**

---

1. ओंकारबाच्य ओंकारमन्त्रेण प्रतिपादितः । (ब्रह्म)
2. ओंकारमयदेहत्वादोंकार इति कथ्यसे । (ब्रह्मा)
3. शौर्येत्कर्षसुतेजोवान् ओजस्वानिति वर्ण्यसे ।)
4. ओषधीनां पतिश्चन्द्रः तदात्मा चौषधीपतिः । (ब्रह्मा)
भक्ताभीष्टमुदारेण दीयते येन ब्रह्मणा ।
औदार्यनिधिरित्येवं स भवान्कथ्यते प्रभुः । (ब्रह्मा)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



कमंडलुधरः शुण्डाशृंगे(दण्डे)णामृतकुंभधृक्[1] । कल्पः प्रलयकालात्मा समर्थः कल्पतेऽपि वा ॥ २८३ ॥ वराटधारी मल्ला(ह्ला)रिस्त्वं कपर्द्यथवा जटी[2] । कलो नादो भा तु दीप्तिरननं प्राणनं मतम् ॥ २८४ ॥ नादकांत्युज्जीवकत्वात्कथ्यसे कलभाननः । कर्मसाक्षी त्वद्दृष्टानामपि द्रष्टासि कर्मणाम् ॥ २८५ ॥ कर्मठप्रेरणादन्तः कर्मकर्ता भवानपि । स्वर्गापवर्गदातृत्वात् कर्माकर्मफलप्रदः ॥ २८६ ॥ सर्वनाडयुद्गमस्थानं कदंबकुसुमाकृतिः । परितःसंवृता ताभिर्हृदि काप्यस्ति देवता ॥ २८७ ॥ कदंबगोलकाकार इति तद्रूप उच्यसे । दुष्टग्रहाणां नेता॰त्वं कूष्मांडगणनायकः ॥ २८८ ॥ कारुण्यदेहः करुणामूर्तित्वात्कपिलो मुनिः । कर्ण(वर्णि)तो वाऽसि कथकः संप्रदायान्प्रवर्तयन् ॥ २८९ ॥ रत्नप्रोतस्वर्णकांचीधारणात्कटिसूत्रभृत् ॥

**खर्वः खड्गप्रियः खड्गखान्तान्तस्थः खनिर्मलः ।**
**खल्वाटभृंगनिलयः खट्वाङ्गी खदुरासदः ॥ ८५ ॥**
**गुणाढ्यो गहनो गस्थो गद्यपद्यसुधार्णवः ।**
**गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ॥ ८६ ॥**
**गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः ।**
**गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः ॥ ८७ ॥**

खर्वो वामनरूपत्वात्खड्गो गण्डकसंज्ञकः ॥ २९० ॥ मृगोऽसिर्वा प्रियो यस्य स तु खड्गप्रियो मतः ॥ खड्गशब्दे खात्परो डस्तदंते

1. रत्नयुक्तहेमकुंभधारणेनाथवा स्मृतः ।
2. कपर्दाख्यजटाधारी कपर्दी पार्वतीपतिः ।
कपर्दिना पूजितोऽयं कपर्दी तु तदात्मवान् ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



गाक्षरे तव ॥ २९१ ॥ बीजे तिष्ठस्यतः खङ्गखान्तान्तस्थ इतीर्यसे[1] । आकाशवत्सर्वगोऽपि निर्लेपोऽतः खनिर्मलः ॥ २९२ ॥ वृक्षा एव गिरेः केशाः खल्वाटस्तैर्विवर्जितः । खल्वाटशृंग-निलयस्तच्छृंगेऽपि वसन् मतः ॥ २९३ ॥ खट्वांगीति भवान् ख्यातः खट्वांगाख्यायुधं दधत् । अमूर्तो व्योमवद्धर्तुं अशक्यः खदुरासदः ॥ २९४ ॥ अनंतकल्याणगुणो गुणाढ्यो गन्तुं न शक्यो गहनोऽसि गस्थः । बीजे निजे तिष्ठसि गद्यपद्यसुधार्णवः काव्यरसाकरत्वात् ॥ २९५ ॥ गदितुं योग्यं गद्यं न निषिद्धं साम ते प्रियं गानम् । तेनासि गद्यगानप्रियोऽथ गर्जोऽसि मेघनादात्मा ॥ २९६ ॥ नादात् गीतादयः शब्दा नादार्थादमरादयः । जातास्तद्द्वयरूपत्वाद्गीतगीर्वाणपूर्वजः ॥ २९७ ॥ गुहाप्रविष्टावात्मानौ गुह्यौ तौ मनसा चरन् । अन्तर्मुखस्तत्र तुष्टो गुह्याचाररतो मतः ॥ २९८ ॥ गुह्य एकांतवेद्यत्वाद्धितकारी गुहाय वा । रहस्यतंत्रवेद्यत्वाद्गुह्यागम-निरूपितः ॥ २९९ ॥ गुहायां हृदयाकाशे शेते यः स गुहाशयः । अव्याकृतं नभो गूढमगाधं च गुहाब्धिवत् ॥३००॥ अधितिष्ठसि तत्तेन गुहाब्धिस्थ इतीर्यसे । गुरुगम्यो गुरुप्रोक्तयोगोपायेन लभ्यसे । शिवसूत्रे गुरुरुपाय इत्येवं त्वं हि वर्णितः । वेदा अध्यापिता येन ब्रह्मणे स गुरोर्गुरुः ॥ ३०२॥

**घण्टाघर्घरिकामाली घटकुंभो घटोदरः ।**
**चण्डश्चण्डेश्वरसुहृच्चण्डीशश्चण्डविक्रमः ॥ ८८ ॥**
**चराचरपतिश्चिन्तामणिचर्वणलालसः ।**
**छन्दश्छन्दोवपुश्छन्दोदुर्लक्ष्यश्छन्दविग्रहः ॥ ८९ ॥**
**जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ।**
**जपो जपपरो जप्यो जिह्वासिंहासनप्रभुः ॥ ९० ॥**

1. खड्गपोत इव तव बीजोऽस्ति च गकारकः ।
तत्र तिष्ठसि तेन त्वं खड्गखान्तान्तस्थ ईरितः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



घण्टेव मञ्जुनादा घर्घरिकाः किंकिणीभेदाः । तद्धारी घंटाघर्घरिकामालीति बाललीला ते ॥ ३०३ ॥ कुंभौ न्युब्जघटाकारौ घटकुंभस्ततो मतः । घटोदरो बृहत्कुक्षिश्चंडो भूरिपराक्रमः ॥ ३०४ ॥ चंडेश्वरः सुहृद्यस्य शैवश्चंडेश्वरः सखा । चण्डीशश्चण्डिकानाथश्चंडा अत्यन्तकोपनाः ॥ ३०५ ॥ तानाक्रम्य वशे कुर्वन्नाख्यातश्चण्डविक्रमः । चराचरपतिः स्थास्नुचरिष्णुजगदीश्वरः ॥ ३०६ ॥ चिन्तामणिकाम-दुघाकल्पद्रुमगर्वचर्वणतः । चिन्तामणिचर्वणलालस इति कथितोऽस्य-चिन्त्यदानेन ॥ ३०७ ॥ गायत्र्याद्यात्मना छन्दो भवान् वेदमयात्मना । छन्दोवपुस्तथा छन्दोदुर्लक्ष्यो वेददुर्ग्रहः[1] ॥ ३०८ ॥ स्वाभिप्रायानु-सारीणि भक्तेः परवशानि वा । अवतारशरीराणि यस्य स च्छंदविग्रहः ॥३०९ ॥ जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः । विश्वस्य कारणं द्रष्टा नाथोऽधिष्ठानमेव च[2] ॥ ३१० ॥ जपो जपपरो जप्यः कर्मकर्तृक्रियात्मकः[3] । कीर्त्यमानं यस्य नाम जिह्वासिंहासनस्थिम् ॥ ३११ ॥ ददाति पुरुषार्थान् स जिह्वासिंहासनप्रभुः ।

**झलज्झल्लोल्लसद्दानझंकारिभ्रमराकुलः ।**
**टंकारस्फारसंरावष्टंकारिमणिनूपुरः ॥ ९१ ॥**

**ठद्वयीपल्लवान्तःस्थसर्वमन्त्रैकसिद्धिदः ।**

---

1. छन्दोवपुस्तथा छन्दोदुर्लक्ष्यो वेदपूरुषैः ।
अप्राप्यश्चाप्यगम्यश्च नेति नेतीति शेषतः ॥

2. जगद्योनिर्विश्वमूलं कारणं कारणेश्वरः ।
जगत्साक्षी विश्वद्रष्टा चिन्मायायोगरूपवान् ॥
जगदीशो गुणेशानरूपी त्रिविधनायकः ।
जगन्मयो व्योमरूपजगदधिष्ठानरूपकः ॥

3. जपो मन्त्रस्वरूपी त्वं मन्त्रविघ्नेशसंज्ञितः ।
मन्त्रकर्ता जपपरो जप्यो मन्त्रक्रियात्मकः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



**डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः ॥ ९२ ॥**

**ढक्कानिनादमुदितो ढौको(५००) ढुंढिविनायकः ।**
**तत्त्वानां परमं तत्त्वं तत्त्वंपदनिरूपितः ॥ ९३ ॥**

झलज्झल्लोल्लसद्दानझंकारिभ्रमराकुलः ॥ ३१२ ॥ नदंति गंडयोर्भृङ्गाः स्फुरन्मदपिपासवः । कांस्यटंकारवत्स्फारो यस्य मञ्जुतरो रवः ॥ ३१३ ॥ टंकारस्फारसंराव इति लोके स गीयते । नदद्रत्नांघ्रि-कटकष्टंकारिमणिनूपुरः ॥ ३१४ ॥ ठद्वयीपल्लवांतःस्थसर्वमंत्रैक-सिद्धिदः । स्वाहान्ताखिलमंत्रोत्थ मुख्यसिद्धिप्रदो यतः ॥ ३१५ ॥ डिण्डिनर्मैकदेशेन डिंडिमौ न्युब्जदुन्दुभी । तावेव कुंभौ यन्मुण्डे डिण्डिमुण्डः स उच्यते ॥ ३१६ ॥ डाकिन्यो नाम योगिन्यः काश्चित्सप्तगणादिमाः । षोढान्यासादिषु स्पष्टा डाकिनीशस्तदीश्वरः ॥ ३१७ ॥ डामरस्तु महांस्तन्त्रविशेषो वा तदात्मकः । दुंदुभौ पटहध्वानेऽप्यानंदी डिण्डिमप्रियः ॥ ३१८ ॥ ढक्कानिनादमुदितो ढक्कावाद्यप्रियो भवान् । गत्यर्थात् ढौकते ढौंकः सर्वगो वासि सर्ववित् ॥ ३१९ ॥ काशीखंडे ढुंढिधातुः प्रथितोऽन्वेषणार्थकः । विशिष्टो नायकोऽन्वेष्य इति ढुंढिविनायकः ॥ ३२० ॥ तत्त्वानां परमं तत्त्वं पंचविंशतितः परम् । त्रयं सृष्ट्यादि स्वप्नादि वाच्यं धर्मं त्वमा सदा ॥३२१ ॥ त्यक्त्वा धर्मिणि भक्त्यैव तत्त्वंपदनिरूपितः[1]।

**तारकान्तरसंस्थानस्तारकस्तारकान्तकः ।**
**स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् ॥९४ ॥**
**दक्षयज्ञप्रमथनो दाता दानवमोहनः ।**
**दयावान् दिव्यविभवो दण्डभृद्दण्डनायकः ॥ ९५ ॥**

1. जीवेशसाक्षिरूपत्वात् तत्त्वंपदनिरूपितः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः ।
दंष्ट्रालग्नद्विपघटो देवार्थनृगजाकृतिः ॥ ९६ ॥

धनधान्यपतिर्धन्यो धनदो धरणीधरः ।
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः ॥ ९७ ॥

तारकान्तरसंस्थानस्तारकाऽक्ष्णः कनीनिका ॥ ३२२ ॥ तस्यां चिन्त्यो य एषोऽन्तरक्षिणीत्यादिकश्रुतेः । तारको भवपाथोधेस्त्वमेव प्रणवो यथा (ऽथवा) ॥ ३२३ ॥ तारकासुरहन्त्रात्मा कथितस्तारकान्तकः । स्थाणुः कल्पान्तवाताग्निसलिलैरप्यकंपितः ॥ ३२४ ॥ स्थाणोः शिवस्य पुत्रत्वात्स्थाणुप्रिय इतीर्यसे । स्थाता युद्धेऽपि कल्पेऽपि निष्कम्पो गगनादिवत् ॥ ३२५ ॥ चराचरात्मकत्वेन स्थावरं जङ्गमं जगत् । दक्षयज्ञप्रमथनो भवानेव शिवात्मना ॥ ३२६ ॥ दाता देयः शोधनार्थाद्भवान् पतितपावनः[1] । दानवांस्तत्त्वविमुखान् कुर्वन् दानवमोहनः ॥ ३२७ ॥ दयावान् परदुःखानि प्रहापयितुमिच्छसि । प्राप्त्यर्थाद्दीव्यतेर्दिव्यविभवः प्रापकः श्रियाम् ॥ ३२८ ॥ दण्डभृत् कथितो दण्डनीतेरपरिलोपतः । यमेन्द्रादिषु ये दण्डास्तन्नेता दण्डनायकः ॥ ३२९ ॥ यच्छिरःकंपमात्रेण मेघपंक्तिः प्रभिद्यते । दंतप्रभिन्नाभ्रमाल इति स त्वं निगद्यसे ॥ ३३० ॥ वारयन् दारयन् दैत्यान् दैत्यवारणदारणः । यस्य दंष्ट्रैकदेशेऽपि लग्ना रिपुगजच्छटाः ॥ ३३१ ॥ दंष्ट्रालग्नद्विपघट इति नाम्ना स गीयते । देवानां कार्यसिद्ध्यर्थं येन मर्त्यद्विपाकृतिः ॥ ३३२ ॥ स्वीकृता स स्मृतो नाम्ना देवार्थनृगजाकृतिः । धनधान्यप्रदत्वेन धनधान्यपतिर्भवान् ॥ ३३३ ॥ धन्यस्त्वं धनलब्धृत्वात् पुण्यवान्वापि गीयसे । धनदो धनदानेन कुबेरात्मतयापि वा ॥ ३३४ ॥ शेषेणादिवराहेणाप्यभिन्नो धरणीधरः[2] ।

1. इष्टार्थदानाद्भक्तानां दाता त्वं गणनायकः ।
2. योगभूमिधारणाद्वा शेषात्मा धरणीधरः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



मनसैवानुद्रष्टव्यो ध्यानैकप्रकटो भवान् ॥ ३३५ ॥ त्वमेव त्रिपुटीध्येयो ध्यानं ध्यानपरायणः ॥

नन्द्यो नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः ।
निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ॥ ९८ ॥

परं व्योम परं धाम परमात्मा परं पदम् ।
परात्परः पशुपतिः पशुपाशविमोचकः ॥ ९९ ॥
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ।
पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ॥ १०० ॥

नन्द्य आनंदनीयोऽसि नंदिकेश्वरवल्लभः ॥ ३३६ ॥ नंदिप्रियोऽसि नादोऽसि योऽन्तर्दशविधध्वनिः । गम्यो नादानुसंधानान्नादमध्यप्रतिष्ठितः ॥ ३३७ ॥ निष्कलोऽवयवैर्हीनो निर्मलो दूषणोज्झितः । नित्यो नाशोज्झितो नित्यानित्यः खोर्व्यादिरूपधृक् ॥ ३३८ ॥ अविद्यैव महारोगस्तदस्पृष्टो निरामयः । अव्याकृतं यदाकाशं परं व्योम तदात्मकः ॥ ३३९ ॥ ज्योतिषामपि यज्ज्योतिस्तत्परं धाम कथ्यते । परमः सर्वजीवेभ्यः परमात्मेति गद्यते ॥ ३४० ॥ कैलासादिपदेभ्योऽपि परमत्वात्परं पदम् । ब्रह्मविष्णुमहेशानाद्युत्तमत्वात् परात्परः ॥ ३४१ ॥ ब्रह्मादिकीटकान्तानां पाता पशुपतिर्मतः । द्विपंचाशद्विधाः पाशाः सांख्यतन्त्रादिषु स्फुटाः ॥ ३४२ ॥ ब्रह्मादीन्मोचयंस्तेभ्यः पशुपाशविमोचकः । पूर्णानन्दः क्रियाकर्तृकर्मभेदोज्झितं सुखम् ॥ ३४३ ॥ भूपादिब्रह्मपर्यन्तानन्दान् शतगुणोत्तरान् । सर्वानप्यधरीकुर्वन् परानंदो महासुखम् ॥ ३४४ ॥ क्षरेभ्यः सर्वभूतेभ्यः कूटस्थादक्षरादपि । उत्तमत्वादनादित्वात् पुराणपुरुषोत्तमः ॥ ३४५ ॥ पद्मप्रसन्ननयनो विकसत्कमलेक्षणः । नमतां तत्त्वबोधेन प्रणताज्ञानमोचनः ॥ ३४६ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः ।
फलहस्तः फणिपतिः फेत्कारः फाणितप्रियः ॥ १०१ ॥
बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली ।
ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ॥ १०२ ॥
बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः ।
बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः ॥ १०३ ॥

प्रमाणप्रत्ययातीतो नित्यज्ञानैकविग्रहः । प्रमाकरणजानां हि प्रमितीनामनित्यता ॥ ३४७ ॥ नमतां नाशयन् पीडां प्रणतार्तिनिवारणः । फलहस्तः स्वभक्तानामविलंबात्फलं ददत् ॥ ३४८ ॥ वासुकेरपि शेषस्य स्वामी फणिपतिर्मतः । फेत्कार इति तन्नाम्ना तन्त्रं तत्र निरूप्यसे ॥ ३४९ ॥ खण्डा(गुडा)ह्वयेक्षुविकृतौ प्रीतिमान् फाणितप्रियः । बाणासुरेण पूज्यत्वाद्बाललीलासु कौतुकात् ॥ ३५० ॥ बाणार्चितांघ्रियुगलो बालकेलिकुतूहली । ब्रह्म त्वमेव वेदान्तवेद्यतत्त्वात्मकत्वतः ॥ ३५१ ॥ ब्रह्मार्चितपदो वेदैः श्लाघनीयं हि ते पदम् । ब्रह्मचारी भवान् येनाकृतदारपरिग्रहः ॥ ३५२ ॥ वाचस्पतिस्वरूपेण देवार्च्यत्वा द्बृहस्पतिः[1] । बृहतो ब्रह्मविष्णवादीनतिशेषे बृहत्तमः ॥ ३५३ ॥ वेदैकतत्परो धातुः श्रेष्ठो ब्रह्मपरो मतः[2] । ब्रह्मण्य इति विख्यातो ब्राह्मणान् मानयन् स्वयम् ॥ ३५४ ॥ प्रिया ब्रह्मविदो यस्य स मतो ब्रह्मवित्प्रियः । चीत्कारो गजशब्दः स मेघाशन्यादितो महान् ॥ ३५५ ॥ तवास्तीति बृहन्नादाग्र्यचीत्कार इति स्मृतः । कटिसूत्रे किंकिणीव ब्रह्माण्डान्येव गुंफयन् ॥ ३५६ ॥ तादृग्दधद्विश्वरूपं ब्रह्माण्डावलि-मेखलः ।

1. बुद्धिस्तु बृहती माया तत्पतित्वाबृहस्पतिः ॥
2. धातुर्वेदैकपरस्य श्रेष्ठो ब्रह्मपरो मतः ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



**भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः ।**
**भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः ॥ १०४ ॥**

**भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः ।**
**मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तमनोरमः ॥ १०५ ॥**

**मेखलावान् मन्दगतिर्मतिमत्कमलेक्षणः ।**
**महाबलो महावीर्यो महाप्राणो महामनाः ॥ १०६ ॥**

भ्रुवोरिङ्गितमात्रेण भक्तेभ्यः संपदो ददत् ॥ ३५७ ॥ भ्रूक्षेपदत्तलक्ष्मीको भर्गो गायत्र्युदीरितः । भद्रा मन्द्रा मृगाश्चेति सन्ति द्विरदजातयः ॥ ३५८ ॥ तेषूत्तमा भद्रजातिर्भद्रस्त्वं तादृशाननः । द्वितीयाद्वै भयं यत्तदपघ्नंस्त्वं भयापहः ॥ ३५९ ॥ उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्सि विद्यामविद्यां चेत्युच्यसे भगवानिति ॥ ३६० ॥ भक्त्यैव लब्धुं यः शक्यः स भक्तिसुलभो महान् (भवान्) । सिद्धीर्दत्से भस्म धत्से भूतिदो भूतिभूषणः ॥ ३६१ ॥ भव्यो भावुकरूपत्वाद्भाविविश्वात्मकत्वतः । भूतानां भूजलादीनां पिशाचानां च देहिनाम् ॥ ३६२ ॥ अतीतानामधिष्ठानमतो भूतालयो भवान् । भोगदाता दुःखसुखसाक्षात्कारप्रदत्वतः ॥ ३६३ ॥ अविमुक्ते भ्रुवोर्मध्ये ध्येयो भ्रूमध्यगोचरः । मंत्राः सामर्ग्यजूरूपा षडर्णैकाक्षरादयः ॥ ३६४ ॥ रहोविचाररूपाश्च राज्यभारोपयोगिनः । तद्रूपस्तदभिमानिदेवता तस्य कारकः ॥ ३६५ ॥ तेन मन्त्रो मन्त्रपतिर्मन्त्रीत्यपि च गीयसे । मदः समाधिसंभूतध्येयान्यविषयाग्रहः ॥ ३६६ ॥ रमसे तद्युते चित्ते मदमत्तमनोरमः । मेखलावान् रशनया मौञ्ज्या वा विलसत्कटिः ॥३६७॥ येषां कापि गतिर्नास्ति मन्दानां ज्ञानकर्मणोः । अभावेन गतिस्तेषामपि मन्दगतिस्ततः ॥ ३६८ ॥ यस्माज्ज्ञानयुता संपत्ताद्दृग् यस्य निरीक्षणम् । दृशैव दत्तधीश्रीको मतिमत्कमलेक्षणः ॥ ३६९ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



बलवीर्यप्राणमनःसमष्टयेकतनुर्भवान् । महाबलो महावीर्यो महाप्राणो महामनाः ॥ ३७० ॥

यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः ।
यशस्करो योगगम्यो याज्ञिको याजकप्रियः ॥ १०७ ॥

रसो(६००) रसप्रियो रस्यो रञ्जको रावणार्चितः ।
रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ॥ १०८ ॥

लक्ष्यं लक्ष्यप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः ।
लानप्रियो लास्यपरो लाभकृल्लोकविश्रुतः ॥ १०९ ॥

यज्ञ इत्यादिकं नामाष्टकं तु प्रकटार्थकम्[1] । रसः परम आनंदो रसो वै स इति श्रुतेः ॥ ३७१ ॥ शांतादौ मधुरादौ वा रसे प्रीत्या रसप्रियः । रस्यते चर्व्यते प्राज्ञैर्भूयो भूयोऽनुभूयते ॥ ३७२ ॥ स रस्यस्तन्मनोवृत्तिरञ्जनेनासि रञ्जकः । रावणैः शब्दनैर्वेद-शास्त्रगीतादिपाठिभिः ॥ ३७३ ॥ दशास्येनापि सिद्ध्यर्थं पूजितो रावणार्चितः । रक्षांसि भस्मसात्कुर्वन् रक्षोरक्षाकरः स्मृतः ॥ ३७४ ॥ रत्नगर्भा मही तद्वान् रत्नगर्भस्तदाश्रयः । राज्यं तज्जन्मसौख्यं च ददद्राज्यसुखप्रदः ॥ ३७५ ॥ तारेण धनुषा चित्तशरेण ब्रह्म वेधयेत् । इति श्रुत्या शरव्यस्त्वं तल्लक्ष्यमसि योगिनाम् ॥ ३७६ ॥ लक्ष्याणि

1. ब्राह्मणस्पत्ययज्ञात्मा यज्ञो यज्ञस्वरूपवान् ।
यज्ञतोष्यो यज्ञपतिर्यज्ञभोक्ता च तत्र भुक् ।
यज्ञे प्रीत्यातु फलदो मतो यज्ञफलप्रदः ।
यशस्करो यशोवृद्धिकर्ता लोकत्रयेषु च ।
ज्ञानयोगेन गम्यस्त्वं योगगम्यस्तु शान्तिदः ।
त्वमेव युग(यज्ञ)कर्ता स्यात्तेन त्वं याज्ञिकः स्मृतः ।
याजकेषु प्रीतियुक्तो मतस्त्वं याजकप्रियः ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



चित्तस्थैर्यार्थं लक्षसंख्यान्यदीदृशन् । ऋषयस्तानि निर्विघ्नं ददल्लक्ष्यप्रदो भवान् ॥ ३७७ ॥ लक्ष्यो लक्षणया गम्यो महावाक्यगतैः पदैः । लयस्थः कल्पकालेऽपि तिष्ठंश्चित्तलयेऽपि वा ॥ ३७८ ॥ लड्डुका वर्तुलाकाराः प्रियालतिलखाखसैः । रचिताः शर्करापक्वास्तत्प्रियो लड्डुकप्रियः ॥ ३७९ ॥ लानप्रियो गजावासशालायां प्रीतिसंयुतः । विलासार्हं परं धाम यस्य लास्यपरो हि सः ॥ ३८० ॥ ये लाभकारिणो लोकाः शीघ्रं भक्तवरप्रदाः । तेषु श्रेष्ठतया ख्यातो लाभकृल्लोकविश्रुतः ॥ ३८१ ॥

**वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः ।**
**विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ॥ ११० ॥**

**वामदेवो विश्वनेता वज्रिवज्रनिवारणः ।**
**विश्वबन्धनविष्कम्भाधारो विश्वेश्वरप्रभुः ॥ १११ ॥**

**शब्दब्रह्म शमप्राप्यः शंभुशक्तिगणेश्वरः ।**
**शास्ता शिखाग्रनिलयः शरण्यः शिखरीश्वरः ॥ ११२ ॥**

वरेण्याख्यो गणपतेरद्वैतभजने रतः । कश्चिद्राजा तदद्वैताद्वरेण्योऽस्युत्तमोऽपि वा ॥ ३८२ ॥ यद्यद्धवन्तमुद्दिश्य समिद्धेऽग्नौ हुतं हविः । तेनैव तृप्यसीत्यर्थात्त्वं वह्निवदनो मतः ॥ ३८३ ॥ वन्द्यो नम्योऽस्युपनिषद्गम्यो वेदान्तगोचरः । विकर्ता त्वं हि षड्भावविकारणां प्रवर्तकः ॥ ३८४ ॥ यत्र क्वचन भक्तेन पत्रं पुष्पं फलं जलम् । दत्तं तत्रैव तत्पश्यन् धारयन् भक्षयन्नपि ॥ ३८५ ॥ कीर्त्यसे विश्वतश्चक्षुर्विधाता विश्वतोमुखः । वामदेवो वल्गुतरं दीव्यसि द्योतसे यतः ॥ ३८६ ॥ विश्वनेतासि जगतो विष्णोर्वा नायको यतः । इन्द्रवज्रस्तंभनेन वज्रिवज्रनिवारणः ॥ ३८७॥ विश्वनिर्माणपर्याप्तो देशो विष्कंभ उच्यते । विश्वबन्धनविष्कंभाधारस्तस्यापि धारणात् ॥ ३८८ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ब्रह्माण्डानां तदीशानां चेशो विश्वेश्वरप्रभुः । शब्दब्रह्म परां वाचमतीतो नादरूपधृक् ॥ ३८९ ॥ शमप्राप्यः शान्तिदान्तिजितचित्तेन लभ्यसे । शैवान् शाक्तान् गणांश्चेष्टे शंभुशक्तिगणेश्वरः ॥ ३९० ॥ शास्ता केरलदेशीया देवताऽस्ति तदात्मकः । तस्याः शिखाया मध्ये यः परमात्मा व्यवस्थितः ॥ ३९१ ॥ श्रुतिसिद्धोऽस्ति तद्रूपः शिखाग्रनिलयो भवान् । त्राता शरण्यः प्रालेयाचलात्मा शिखरीश्वरः ॥ ३९२ ॥

**षड्तुकुसुमस्रग्वी षडाधारः षडक्षरः ।**
**संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ॥ ११३ ॥**

**सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदनः ।**
**सिन्दूरितमहाकुम्भः सदसद्व्यक्तिदायकः ॥ ११४ ॥**

**साक्षी समुद्रमथनः स्वसंवेद्यः स्वदक्षिणः ।**
**स्वतन्त्रः सत्यसङ्कल्पः सामगानरतः सुखी ॥ ११५ ॥**

जातीचम्पककुन्दादीन्येकैकर्तुभवान्यपि । षड्तुकुसुमस्रग्वी सर्वदा युगपद्दधत् ॥ ३९३ ॥ मूलाधारे गणेशोऽस्ति चक्रषट्कं तदूर्ध्वतः। षण्णामाधारभूतोऽसि षडाधार इति स्मृतः ॥ ३९४ ॥ ङेवर्मयुग्वक्र-तुण्डमन्त्ररूपः षडक्षरः । संसारवैद्य इत्युक्तो भवरोगविनाशकः ॥३९५॥ सर्वज्ञः सकलज्ञाता सुगतात्मा विनायकः । सर्वेषामपि रोगाणां दिव्यं पीयूषमौषधम् ॥ ३९६॥ तस्यापि नाशयन् दोषान् सर्वभेषजभेषजम् ॥ लीलया सर्वजगतां निर्मिति-स्थिति-संहृतीः ॥ ३९७ ॥ सृष्टि-स्थिति-लयक्रीडः कथ्यसे रचयन् क्षणात् । दानवैरर्चितश्चेत्त्वं सुरकुञ्जरभेदनः ॥ ३९८ ॥ सिन्दूरितमहाकुंभः सिन्दूरारुणमस्तकः । सद्ब्रह्मैव न सद्विश्वं तयोर्व्यक्तिः प्रकाशनम् ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



३९९ ॥ स्वभक्तेभ्यो ददासीति सदसद्व्यक्तिदायकः । साक्षी पश्यसि साक्षात्त्वं विश्वं चित्तानपेक्षया ॥ ४०० ॥ समुद्रमथने देवैर्मन्थनारंभणेऽर्चितः । समुद्रमथनः प्रोक्तः स्वसंवेद्यः परात्परः ॥ ४०१ ॥ परज्योतिः स्वरूपत्वात् स्वयंशक्तः स्वदक्षिणः ॥ ४०२ ॥ स्वतन्त्रः स्वयमेवासि नानातन्त्रात्मना यतः । अमोघकल्पनात् सत्यसंकल्प इति गीयसे ॥४०३ ॥ सामप्रीतेः सदानंदात् सामगानरतः सुखी ।

हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् ।
हव्यो हुतप्रियो हर्षो हृल्लेखामन्त्रमध्यगः ॥ ११६ ॥

क्षेत्राधिपः क्षमाभर्ता क्षमापरपरायणः ।
क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ॥ ११७ ॥

हंसो यतिविशेषात्मा यद्वा भास्करमूर्तिकः[1] ॥ ४०४ ॥ एतत्पञ्चाक्षरस्यान्ते लिखेच्छब्दाद्विठो मनुः । तत्प्रतीकमुपादाय तस्येशो देवतोदिता ॥ ४०५ ॥ सोऽयं हस्तिपिशाचीशो नवार्णमनुदेवता । यागः प्रक्षेपयुग्होमस्तद्रूपो हवनं भवान् ॥ ४०६ ॥ देवताः पितरश्चेति द्विरूपो हव्यकव्यभुक् । हव्यो हविःस्वरूपत्वाद्धविर्ब्रह्मेति हि स्मृतेः ॥ ४०७ ॥ हुतं द्रव्यं प्रियं यस्या देवतायाः (हुतप्रियः) स वै भवान् । हविर्भक्षणजो मोदो हर्षः सोऽपि त्वदात्मकः ॥ ४०८ ॥ हृल्लेखार्थस्तन्त्रराजे वर्णितो व्याकुलाक्षरैः । व्योम्ना प्रकाशमानस्त्वं ग्रसमानस्त्वमग्निना ॥ ४०९ ॥ तयोर्विमर्श ईकारो बिन्दुना तन्निफालनम् । इति ह्रींकारवाच्योऽसि

1. हंसो यति विशेषो वा गणको भानुमूर्तिमान् ।
2. काशीमयूरपुर्याद्य क्षेत्रेशा बहुविश्रुताः ।
अधिपश्चापि तेषां त्वं देव क्षेत्राधिपो मतः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



हृल्लेखामन्त्रमध्यगः ॥ ४१०॥ प्रयागादेः शरीरादेर्वेशः क्षेत्राधिपो मतः । क्षमाभर्ता क्षितिं क्षान्तिमपि वा यो बिभर्ति सः ॥ ४११ ॥ क्षान्तिशीलमुनिप्राप्यः क्षमापरपरायणः । शीघ्रं सिद्धिं ददातीति क्षिप्रक्षेमकरो भवान् ॥ ४१२ ॥ क्षेमं सांसारिकं सौख्यमानन्दः पारमार्थिकः । उभयात्मा त्वमेवेति क्षेमानन्द इतीर्यसे ॥ ४१३ ॥ कल्पवृक्ष इव क्षोण्यामिष्टान्सर्वान्प्रयच्छसि । धर्मादिदुःखभोगान्तान् अतः क्षोणीसुरद्रुमः ॥ ४१४ ॥

**धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः ।**
**विद्याप्रदो विभवदो भुक्तिमुक्तिफलप्रदः ॥ ११८ ॥**

**आभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः ।**
**सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ॥ ११९ ॥**

**मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ।**
**प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥ १२० ॥**
**पराभिचारशमनो दुःखभञ्जनकारकः ।**

कल्पद्रुमत्वं विविनक्त्येकविंशतिनामभिः । धर्मप्रदोऽर्थदः कामदातेत्युक्तस्त्रिवर्गदः ॥ ४१५ ॥ स्त्रीणां जीवत्पतित्वादि ददत्सौभाग्यवर्धनः । विद्याप्रदो विभवदो ज्ञानसंपत्तिदायकः ॥ ४१६ ॥ भोगजीवन्मुक्तिदानाद्भुक्तिमुक्तिफलप्रदः । आढ्यैः सह दरिद्राणां मूर्खाणां पण्डितैः सह । साम्यं प्रदर्शयन् सभ्येष्वाभिरूप्यकरो मतः ॥ ४१७ ॥ समरे कान्दिशीकानां अपि वीरश्रियं ददत् । नाम स्मृतवतां वीरश्रीप्रदः कीर्त्यसे बुधैः ॥ ४१८ ॥ वीरश्रिया जयफलं ददानो विजयप्रदः । सर्वं भक्तवशे कुर्वन् सर्ववश्यकरो भवान् ॥ ४१९ ॥ बीजदोषान् स्रावपातौ नाशयन् गर्भदोषहा । पुत्रः सूनुश्च दुहिता



https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



तत्पौत्रान् दुहितुः सुतान् ॥ ४२० ॥ नप्तॄन्प्रणप्तॄन् दौहित्रान् ददानः पुत्रपौत्रदः । धीर्धारणावती मेधा मेधादस्तत्प्रदायकः ॥ ४२१ ॥ लोके या सद्गुणख्यातिस्तत्प्रदानेन कीर्तिदः । शोकहारी ज्ञानदानात्तरति शोकमात्मवित् ॥ ४२२ ॥ दुर्भगत्वापहारेण स्त्रीणां दौर्भाग्यनाशनः । वाचं स्तभ्नासि दुष्टानां प्रतिकूलं प्रजल्पताम् ॥ ४२३ ॥ प्रतिवादिमुखस्तम्भः कथ्यसे स्मृतिमात्रतः । सेवकेषु क्रोधजुषां राज्ञां चित्तानि शोधयन् ॥ ४२४ ॥ स्नेहशालीनि कुर्वाणो रुष्टचित्तप्रसादनः । पराभिचारशमनो मारणाख्यस्य कर्मणः ॥ ४२५ ॥ स्वशत्रुभिः प्रणीतस्य निष्फलीकरणान्मतः । भञ्जयन् सर्वदुःखानि दुःखभञ्जनकारकः ॥ ४२६ ॥

**लवस्त्रुटिः कला काष्ठा निमेषस्तत्परः क्षणः ॥ १२१ ॥**

**घटी मुहूर्तं प्रहरो दिवा नक्तम्(७००) अहर्निशम् ।**
**पक्षो मासोऽयनं वर्षं युगं कल्पो महालयः ॥ १२२ ।**

**राशिस्तारा तिथिर्योगो वारः करणमंशकम् ।**
**लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः ॥ १२३ ॥**

**राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः ।**
**कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं च यत् ॥ १२४॥**

अथ कालस्वरूपत्वमुक्तं विंशतिनामभिः । पद्मपत्रसहस्रस्य सूक्ष्मसूच्याभिवेधने ॥ ४२७ ॥ दले दले लवः कालः सहस्रेण लवैस्त्रुटिः ॥ ४२८ ॥ त्रुटेः शतं तत्परस्तैर्निमेषस्त्रिंशता भवेत् । अष्टादशनिमेषैः स्यात्काष्ठा तत्रिंशता कला ॥ ४२९ ॥ तत्त्रिंशता क्षणस्ते षड्घटी ताभ्यां मुहूर्तकम् । प्रहरस्तच्चतुष्कं तच्चतुष्कं नक्तकं दिवा ॥ ४३० ॥ अहर्निशं त्वहोरात्रं प्रहरैरष्टभिर्भवेत् । ते पञ्चदश पक्षस्तौ मासः षडयनं तु

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ते ॥ ४३१ ॥ ताभ्यां तु मानुषं वर्षं तैः षष्ट्या त्रिशतीयुजा । दिव्यं द्वादशसाहस्रैर्दिव्यवर्षैश्चतुर्युगम् ॥ ४३२ ॥ चतुर्युगसहस्रेण कल्पो दैनन्दिनो लयः । द्वासप्ततिसहस्रैस्तैः स्यान्महाप्रलयो विधेः ॥ ४३३ ॥ राशिर्द्वादश मेषाद्याः कृत्तिकाद्याश्च तारकाः । त्वमेव च तिथिश्चान्द्री कला पञ्चदशात्मिका ॥ ४३४ ॥ विष्कम्भप्रथमा योगास्त्वद्रूपाः सप्तविंशतिः । योगा अमृतसिद्धाद्या आनंदाद्यास्त्वमेव च ॥ ४३५ ॥ रव्यादिसप्तवारात्मा बवादिकरणात्मकः । चत्वारि प्रतिनक्षत्रमंशकानि त्वमेव हि ॥ ४३६ ॥ राशीनामुदयो लग्नं होरा लग्नार्धसंमिता । कालचक्रं शैशुमारं मेरुः सौवर्णपर्वतः ॥ ४३७ ॥ सप्तर्षयः कश्यपाद्या औत्तानचरणिर्ध्रुवः । राह्वादयो ग्रहा अष्टौ त्वद्रूपा एव नेतरे ॥ ४३८ ॥ कलनात् काल इत्युक्तो जगत्संहरणक्रिया । सृष्टिः स्थितिश्च जगदुत्पादनप्राणनक्रिये ॥ ४३९ ॥ यत्स्थावरादि विश्वं तत्त्वमित्येकाभिधानकम् ।

**भूरापोऽग्निर्मरुद्व्योमाहङ्कृतिः प्रकृतिः पुमान् ।**
**ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः ॥१२५॥**

**त्रिदशाः पितरः सिद्धा यक्षा रक्षांसि किन्नराः ।**
**साध्या विद्याधरा भूता मनुष्याः पशवः खगाः ॥ १२६ ॥**

**समुद्राः सरितः शैला भूतं भव्यं भवोद्भवः ।**
**साङ्ख्यं पातञ्जलं योगः पुराणानि श्रुतिः स्मृतिः ॥१२७॥**
**वेदाङ्गानि सदाचारो मीमांसा न्यायविस्तरः ।**
**आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम् ॥ १२८ ॥**

**वैखानसं भागवतं सात्वतं पाञ्चरात्रकम् ।**
**शैवं पाशुपतं कालामुखं भैरवशासनम् ॥ १२९ ॥**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



शाक्तं वैनायकं सौरं जैनमार्हतसंहिता ।
सदसद्व्यक्तमव्यक्तं सचेतनमचेतनम् ।। १३० ।।

भूरापोऽग्निर्मरुद्व्योम पञ्चभूतात्मको भवान् ।। ४४० ।। अहङ्कृतिरहङ्कारः प्रकृतिर्मूलकारणम् । पुमांश्च पञ्चविंशस्त्वं प्रकृत्याद्यैरसंहतः ।। ४४१ ।। मञ्चस्थब्रह्मविष्णवीशरुद्राः पादाः सदाशिवः । फलकस्तत्र कामेशः शिवस्तस्यांकगामिनी ।। ४४२ ।। शक्तिः कामेश्वरीत्येते सप्तापि भवदात्मकाः । त्रिदशादिकशैलान्ता अर्थास्त्वं तिथिभिर्मिताः[1] ।। ४४३ ।। भवान् भूतमतीतं च भव्यं क्षेमं च भावि च । भवोद्भवः शिवोत्पन्नः संसारप्रभवोऽथवा ।। ४४४ ।। अथ सांख्यादयो विद्यास्त्वद्रूपाः सप्तविंशतिः । साङ्ख्यं कपिलमुन्युक्तं शास्त्रं पातञ्जलं पुनः ।। ४४५ ।। सामसूत्रनिदानाख्यं योगः फणिपतीरितः । ब्राह्मादीनि पुराणानि श्रुतयो बह्वृचादयः ।। ४४६ ।। मन्वाद्याः श्रुतयो वेदाङ्गानि कल्पादिकानि षट् । सदाचारः सदाचारसङ्ग्रहात्माऽधुना ततः ।। ४४७ ।। मीमांसा षोडशाध्यायी संकर्षसहिता सती । त्रिचतुर्लक्षणे भक्तिब्रह्ममीमांसके अपि ।। ४४८ ।। कणादगौतममुनिप्रणीतो न्यायविस्तरः । ऋग्यजुःसामवेदानामुपवेदा अपि क्रमात् ।। ४४९ ।। आयुर्वेदधनुर्वेदगांधर्वास्तन्मयो भवान् । काव्यनाटकशब्दाभ्यां श्रव्यं दृश्यं च गृह्यते ।। ४५० ।। श्रव्यमष्टविधं दृश्यं अष्टाविंशतिधा च यत् । संकीर्णं यच्च बहुधा तत्तत्सर्वात्मको भवान् ।। ४५१ ।। विष्णोर्वैखानसादीनि शैवानि तु महेशितुः ।। पृथक् चत्वारि चत्वारि तन्त्राण्येतत्त्वदात्मकम् ।। ४५२ ।। शाक्तादित्रितयं शक्तेर्गणेशस्य

1. ब्रह्माद्याः पञ्च भूतानामीश्वराः सन्नियामकः ।
पञ्चानां जननी शक्तिः प्रकृतिः परदेवता ।।
शिवस्तु पुरुषो ज्ञेयस्तद्रूपी त्वं गणेश्वर ।
वियदादिकशैलान्तजीवरूपी त्वमेव च ।।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



विवस्वतः । तन्त्रे द्वे नास्तिकोन्नीते अपि जैनार्हते तथा ॥ ४५३ ॥ कार्याणां कारणस्यान्तरवस्थानं सदात्मता । अकारणेनावस्थानं तदभावेऽसदात्मता ॥ ४५४ ॥ सर्वं कार्यात्मना व्यक्तमव्यक्तं कारणात्मना । सचेतनं प्राणिमात्रं व्योमादिकमचेतनम् ॥ ४५५ ॥

**बन्धो(८००) मोक्षः सुखं भोगोऽयोगः सत्यमणुर्महान् ।**
**स्वस्ति हुं फट् स्वधा स्वाहा श्रौषड्वौषड्वषण्णमः ॥ १३१॥**

**ज्ञानं विज्ञानमानन्दो बोधः संविच्छमो यमः ।**
**एक एकाक्षराधार एकाक्षरपरायणः ॥ १३२ ॥**

बन्ध आत्मन्यनात्मत्वभ्रमो नात्मनि चात्मता । एतत्सर्वं भवानेव भगवन् परिकीर्तितः ॥ ४५६ ॥ मोक्षस्त्वविद्याविध्वंसस्ततो यदवशिष्यते । तत्सुखं प्रत्यगानन्दो भोगः सोऽनुभवात्मकः ॥ ४५७ ॥ अयोगः संगरहितः तद्धि सत्यमबाधितम् । स एवाणुर्मनः षष्ठेन्द्रियागोचरतावशात् ॥ ४५८ ॥ ततोऽधिकस्य सौख्यस्याभावादेव स वै महान् । तदेव सम्यगस्तीति स्वस्ति नास्ति ततः परम् ॥ ४५९ ॥ अन्यस्य दूरीकरणात्तदेव ब्रह्म हुं मतम् । दूरोत्सारणमात्रं न किंतु (विघ्न)नाशोऽपि तेन फट् ॥ ४६० ॥ स्वधेति पितृदैवत्यं स्वाहेत्यग्न्यादिदैवतम् । श्रौषडित्यादयस्तत्तच्छब्दयुक्कर्मलक्षकाः ॥ ४६१ ॥ सर्वेषां कर्मणामिष्टसिद्ध्यर्थत्वान्महाफले । सुखे लब्धे तु तत्रैव तत्सर्वं पर्यवस्यति ॥ ४६२ ॥ तेन कर्मापि सकलं भवेदेकात्मकं सुखम् । मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं तद्द्वयं भवान् ॥ ४६३ ॥ त्वमेव प्रत्यगानन्दः प्रत्यग्बोधस्त्वमेव हि । योगिभिः सेव्यते संविद्बाह्यवृत्तिनिरासिका ॥ ४६४ ॥ तदेकप्रवणत्वाय सौषधी भवदात्मिका । सर्वस्य शमनात्सर्वोपरमात्त्वं शमो यमः[1] ॥ ४६५ ॥ एक एवाद्वितीयस्त्वं

1. सर्वस्य दुष्टभावस्य शमनाच्च शमो यमः ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



भेदत्रैविध्यशून्यतः । गंबीजान्तःस्थितेरेकाक्षराधार इति स्मृतः ॥ ४६६ ॥ ओमित्येकाक्षरस्थत्वादेकाक्षरपरायणः ।

**एकाग्रधीरेकवीर एकानेकस्वरूपधृक् ।**
**द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः ॥ १३३ ॥**

**द्वैमातुरो द्विवदनो द्वन्द्वातीतो द्वयातिगः ।**
**त्रिधामा त्रिकरस्त्रेतात्रिवर्गफलदायकः ॥ १३४ ॥**

एकाग्रधीः स्वात्ममात्रप्रवणापि मतिर्भवान् ॥ ४६७ ॥ अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः । पराक्रमपरोऽस्येकवीरस्त्वत्तो न चापरः[1] ॥ ४६८ ॥ प्रतिभूतमवस्थानादेकानेकस्वरूपधृक् । एकधा बहुधा चैव दृश्यसे जलचन्द्रवत् ॥ ४६९ ॥ द्वे ब्रह्मणी इति श्रुत्या द्विरूपोऽस्यपरं परम् । त्वमेव द्विभुजो द्व्यक्षो द्विरदः प्रकटार्थकः ॥ ४७० ॥ सप्तद्वीपाधिपत्यस्य प्रदानाद्वीपरक्षकः । द्वैमातुरोऽस्युमागङ्गे मातरौ तव विश्रुते ॥ ४७१ ॥ तवैव मूर्तिरग्र्याख्या तेन द्विवदनो भवान्[2] । शीतोष्णादीन्यतिक्रान्तो द्वन्द्वातीत इति श्रुतः ॥ ४७२ ॥ रजस्तमश्चातिलिङ्गञ्च वर्तमानो द्वयातिगः । त्रिधामा सूर्यचन्द्राग्नि-तेजस्त्रितयमूर्तिमान्[3] ॥ ४७३ ॥ त्रयाणामपि लोकानां (देवानां) करणात्त्रिकरो भवान् । नर्याद्यग्नित्रयाकाङ्क्षधर्मकामार्थकर्मणाम्[4] ॥ ४७४ ॥ फलप्रद इति त्रेधात्रिवर्गफलदायकः ।

1. लयादि ब्रह्मकल्पान्तमयस्य कालरूपिणः ।
जेता देवेष्वेकवीरः त्वत्तो नास्ति सुरेष्वपि ॥

2. नरगजवक्त्रयुक्तो भवान्द्विवदनो मतः ।

3. त्रिधामा सच्चिदानन्दब्रह्मत्रितयसंज्ञकः ।

4. समष्टि व्यष्ट्यभेदात्मा त्रेता त्वं गजवक्त्रक ।
धर्मार्थकालफलदः त्रिवर्गफलदायकः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ।
चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्मुखः ॥ १३५ ॥

चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः ।
चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः ॥ १३६ ॥

चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसंभवः ।
पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्यकृत् ॥ १३७ ॥

गुणत्रयवती मूलप्रकृतिस्त्रिगुणा मता ॥ ४७५ ॥ तस्या हृदि त्वमेवेति त्रिगुणात्मेति गीयसे । त्रयाणामपि लोकानां त्रिलोकादिश्च कारणम् ॥ ४७६॥ रमालज्जानङ्गयोगस्त्रिशक्तिः कथ्यते मनुः । प्रभावोत्साहमन्त्रा वा त्रिशक्तीशस्तदीश्वरः[1] ॥ ४७७ ॥ त्रिलोचनश्चतुर्बाहुश्चतुर्दन्त इति स्फुटम्[2] । आत्मान्तरात्मा ज्ञानात्मा परमात्मेति भेदतः ॥ ४७८ ॥ आत्मोपनिषदि प्रोक्तश्चतुरात्मा त्वमेव हि। चतुर्विधा मुखे वेदा यस्य स त्वं चतुर्मुखः ॥ ४७९ ॥ भेदो दण्डः साम दानमित्युपायचतुष्टयम् । चतुर्विधोपायमयस्तज्जन्यफल-साधकः॥४८०॥ ब्राह्मणब्रह्मचर्यादिवर्णा श्रमविभागशः । विहितैः कर्मभिः प्राप्यश्चतुर्वर्णाश्रमाश्रयः ॥ ४८१ ॥ गुहायां वर्तयंस्तिस्रः पश्यंतीं मध्यमां पराम् । वैखरीं परितो बाह्यवर्तनेन प्रवर्तयन् ॥ ४८२ ॥

---

1. भ्रामर्याधारकामेभ्यो नैजास्त्रिशक्तयो मताः ।
तासामीशस्त्रिशक्तीशः स्वानन्दभुवनेश्वरः ॥

2. त्रिधा स्थितं ब्रह्म यस्य लोचनानि मुखांबुजे ।
त्रिलोचनस्ततः प्रोक्तो निर्गुणं यच्चतुर्विधम् ।
तदेव दन्तास्त्वक्त्रे चतुर्दन्तस्ततो भवान् ।
सदसत्समसहजसंज्ञिकं तु चतुर्विधम् ।
स्वानन्दं यस्य देवस्य ख्यातस्तेन चतुर्भुजः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः । चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसंभवः । इति नामद्वयं स्पष्टं स्याद्गणेशपुराणतः[1] ॥ ४८३ ॥ नादबिन्दुमकारोकाराकाराः प्रणवस्थिताः ॥ ४८४ ॥ त्वच्छरीरमतः पञ्चाक्षरात्मा परिकीर्त्यसे । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥४८५ ॥ यस्यैते विग्रहाः पञ्च स पञ्चात्मेति गीयसे[2] । विस्तीर्णं वदनं यस्य ब्रह्माण्डकवलक्षमम् ॥ ४८६ ॥ पचेर्विस्तारवाचित्वात्स पञ्चास्य इति स्मृतः । सृष्टिः स्थितिश्च संहारस्तिरोधानमनुग्रहः ॥ ४८७ ॥ ब्रह्मादिरूपैरेतानि कुर्वाणः पञ्चकृत्यकृत् ।

**पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः ।**
**पञ्चतालः पञ्चकरः पञ्चप्रणवभावितः ॥ १३८ ॥**

**पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः ।**
**पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिवात्मकः ॥ १३९ ॥**

पञ्चाधारोऽसि भूतानां पञ्चानामपि धारकः ॥ ४८८ ॥ सर्वदा सूर्यकोटिप्रभः सन् कृतत्रेतयोश्चन्द्रवर्णोऽर्जुनद्रुच्छविः । द्वापरे शक्रगोपोपमोऽभूत्कलौ धूम्रवर्णोऽभवत्पञ्चवर्णो भवान्[3] ॥ ४८९ ॥ जपन् पञ्चाक्षरं शैवं पञ्चाक्षरपरायणः । आमध्यमाग्रादङ्गुष्ठात्प्रमाणं ताल

1. चतुर्थ्यां पूजनेनैव प्रीतो विधिपुरस्सरम् ।
चतुर्थीपूजनप्रीत इति त्वं परिगीयसे ।
चतुर्थ्यां यस्तु सञ्जातः चतुर्थीतिथिसंभवः ॥

2. ब्रह्मा विष्णुश्च रुद्रश्च परा शक्तिश्च भास्करः ।
यस्यैते विग्रहाः पञ्च स पञ्चात्मेति गीयसे ।

3. सूर्यकोटिप्रभस्त्वं तु सर्वदा गणनायकः ।
हेमवर्णः कृतयुगे त्रेतायां धवलच्छविः ॥
द्वापरे रक्तवर्णस्त्वं कलौ तु धूमवर्णकः ॥ (ब्रह्मा)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



उच्यते ॥ ४९० ॥ तालपञ्चकदेहाढ्यः पञ्चतालोऽसि वामनः । पञ्चहस्तमितः प्रांशुरपि पञ्चकरो भवान् ॥ ४९१ ॥ तारवाग्भवलज्जाभाः प्रसादपरया सह । प्रणवाः पञ्च तैर्वाच्यः पञ्चप्रणवभावितः[1] ॥ ४९२ ॥ सद्योजातवामदेवाघोरतत्पुरुषेश्वरैः । [2]पञ्चब्रह्ममयस्फूर्तिरभिन्न-स्फुरणात्मकः ॥ ४९३ ॥ पञ्चावृतिस्तवप्रोक्तैरङ्गाद्यावरणैर्वृतः । छन्नो वा पञ्चभिः कोशैः पञ्चावरणवारितः[3] ॥ ४९४ ॥ लड्डुकमंडकपूरीफेणीवटकाभिधानि भक्ष्याणि । यस्य प्रियाणि पञ्चापि पञ्चभक्ष्यप्रियः स भवान् ॥ ४९५ ॥ बाणेश्वर्यभिधाम्बायाः कामेश्वरशिवस्य च । प्रत्येकं पञ्च बीजानि सिद्धान्येव तु तद्विदाम् ॥ ४९६ ॥ तदात्मकतया पञ्चबाणः पञ्चशिवात्मकः[4] ।

**षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः ।**
**षडध्वध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ॥ १४० ॥**

**षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ।**
**षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः ॥ १४१ ॥**

**षट्तर्कदूरः षट्कर्मनिरतः षड्रसाश्रयः ।**
**सप्तपातालचरणः सप्तद्वीपोरुमण्डलः ॥ १४२ ॥**

1. अकारोकारमकारनादबिन्दुमयाः पराः ।
प्रणवाः पञ्च तैरर्च्यः पञ्चप्रणवभावितः ॥ (ब्रह्मा)

2. सदसत्समसहजयोगसंज्ञिकैर्व रैः ।
पञ्चब्रह्ममयस्फूर्तिः अभिन्नस्फुरणात्मकः ॥ (ब्रह्मा)

3. पञ्चावृतिदेवसेव्यः पञ्चावरणवारितः । (ब्रह्मा)

4. पञ्चबाणो मन्मथस्तु पञ्चबाणस्तदात्मकः ।
परः शिवभुवनेशरुद्रेश्वरसदाशिवाः ।
सहजसांख्यपरमशिवरुद्राभिधो ह्यथ ।
शिवः पञ्चविधः प्रोक्तः आत्मा पञ्चशिवात्मकः । (ब्रह्म)

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः ।
सप्ताङ्गराज्यसुखदः सप्तर्षिगणमण्डितः ॥ १४३ ॥

षट्कोणपीठः कोणाः षट् पूजास्थानानि यस्य सः ॥ ४९७ ॥ षट्चक्रधामा त्वं मूलाधिष्ठानमणिपूरकाः । अनाहतविशुद्ध्याज्ञा वासस्थानानि यस्य सः ॥ ४९८ ॥ मूलाज्ञामणिपूरेषु द्वौ द्वौ ग्रंथी भिनत्ति यः । वह्निकुंडलिनी सैव भवान् षड्ग्रंथिभेदकः ॥ ४९९ ॥ पदभुवनवर्णतत्त्वकलामंत्राख्याः षडध्वानः । तच्छोधनकर्तृत्वेन षडंध्वध्वान्तविध्वंसी ॥ ५०० ॥ महाह्वदो नाभिरूपो गांभीर्येण षडङ्गुलः । पिचण्डिलत्वाद्यस्यैष षडङ्गुलमहाह्वदः ॥ ५०१ ॥ षट्संख्याकानि शास्त्राणि मुखे यस्य स षण्मुखः । स भवान् षण्मुखभ्राता सेनानीर्यस्य तेऽनुजः ॥ ५०२ ॥ षडङ्गयुवतिच्छन्नः षट्शक्तिपरिवारितः । षड्वैरिवर्गविध्वंसी कामक्रोधौ च मत्सरम् ॥ ५०३ ॥ लोभमोहमदान् हंसि षडिमान्वैरिशब्दितान् अशनायां पिपासां च शोकं मोहं जरां मृतिम् ॥ ५०४ ॥ षडूर्मिशब्दितान्निघ्नन् षडूर्मिभयभञ्जनः । षड्दर्शनोदितैस्तर्कैर्युक्तिभिर्यो न गृह्यते ॥ ५०५ ॥ वागतीतः स षट्तर्कदूर इत्यभिधीयते[1] ॥ षट्कर्मनिरतः सक्तः षट्सु यागादिकर्मसु ॥ ५०६ ॥ मधुरादिरसानामप्याधारः षड्रसाश्रयः । अतलाद्या अधोऽधःस्थाः सप्त लोका यदङ्घ्रिगाः ॥ ५०७ ॥ सप्त जम्ब्वादयो द्वीपा यस्य सक्थि भुवर्मुखाः । ऊर्ध्वगाः सप्त गोलोकावधयो यस्य मूर्ध्नि सः ॥ ५०८ ॥ सप्तपातालचरणः सप्तद्वीपोरुमंडलः । सप्तस्वर्लोकमुकुट इति नामत्रयेरितः ॥ ५०९ ॥ सप्ताभिर्जटाभिः सहितः

1. मन्त्रतर्को यन्त्रतर्कः तन्त्रतर्कः प्रयोगकः ।
अणुतर्को न्यायतर्कः तर्का एव तु षड्विधाः ॥
शुक्रश्च विश्वकर्मा च विष्णुश्च मय दानवः ।
कणादो गौतमश्चैव दर्शनानां प्रवर्तकाः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सप्त इत्युच्यते शिवः । मणिमल्लमृधे तस्मै भवान् प्रादाद्धयोत्तमम् (जयं परम्) ॥ ५१० ॥ सूर्याय वा वरं तेन सप्तसप्तिवरप्रदः । स्वाम्यमात्यादिसप्ताङ्गयुक्तराज्यात् सुखं ददत् ॥ ५११॥ सप्ताङ्गराज्यसुखदः सप्तभिः कश्यपादिभिः । गणदेवैश्च सेव्यत्वात् सप्तर्षिगणमंडितः ॥ ५१२॥

**सप्तच्छन्दोनिधिः सप्तहोता सप्तस्वराश्रयः ।**
**सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः ॥ १४४ ॥**

**सप्तच्छन्दोमोदमदः सप्तच्छन्दोमखप्रभुः ।**
**अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥ १४५ ॥**

**अष्टाङ्गयोगफलभूरष्टपत्राम्बुजासनः ।**
**अष्टशक्तिसमृद्धश्रीः(९००) अष्टैश्वर्यप्रदायकः ॥ १४६ ॥**

सप्तछन्दोनिधिः पथ्यच्छन्दःसप्तकसंश्रयः । होत्रादयोऽच्छावा (यःस्ताव)कान्ताः होतारः सप्त सौमिकाः ॥ ५१३ ॥ महाहविर्मुनिर्वापि सप्तहोता तदात्मकः । षड्जादिस्वरवान्नाद इति सप्तस्वराश्रयः ॥ ५१४ ॥ सप्ताब्धिकेलिकासारो यस्य क्रीडासरोऽर्णवः । ब्राह्मयादिमातृसेव्यत्वात् सप्तमातृनिषेवितः ॥ ५१५ ॥ पथ्यादि सप्तच्छन्दांसि तेषां मोदेन यो मदः । तेनैव घूर्णनात् सप्तच्छन्दोमोदमदः स्मृतः ॥ ५१६ ॥ पथ्या (उक्था)द्यक्रतुपूज्यत्वात् सप्तच्छन्दोमखप्रभुः । अष्टमूर्तिः शिवस्तेन यन्मूर्तिर्हृदि चिन्त्यते ॥ ५१७ ॥ सोऽष्टमूर्तिर्ध्येय-मूर्तिर्ध्येयो वा पृथगष्टभिः । प्रकृत्यहङ्कृतिमहत्पञ्चतन्मात्रसंज्ञिताः ॥५१८ ॥ प्रकृतीर्यो जनयति सोऽष्टप्रकृतिकारणम् । अष्टाङ्गयोगफलभूः समाध्यन्तैर्यमादिभिः ॥ ५१९ ॥ अङ्गैर्युक्तस्य हृद्वृत्तिरोधस्य फलदायकः । पङ्कजेऽष्टदले तिष्ठन् अष्टपत्राम्बुजासनः ॥ ५२० ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



अष्टशक्तिसमृद्धश्रीर्दलाष्टकनिवासिना । तीव्रादिशक्त्यष्टकेन परितः सेवितो भवान् ॥ ५२१ ॥ दाताऽणिमादिसिद्धीनामष्टैश्वर्यप्रदायकः ।

अष्टपीठोपपीठश्रीरष्टमातृसमावृतः ।
अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ॥ १४७ ॥
अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः ।
नवनागासनाध्यासी नवनिध्यनुशासिता ॥ १४८ ॥
नवद्वारपुराधारो नवाधारनिकेतनः ।
नवनारायणस्तुत्यो नवदुर्गानिषेवितः ॥ १४९ ॥
नवनाथमहानाथो नवनागविभूषणः ।
नवरत्नविचित्राङ्गो नवशक्तिशिरोधृतः ॥ १५० ॥

अष्टपीठोपपीठश्रीर्महापीठोपपीठयोः ॥ ५२२ ॥ पुराणे स्फुटयोर्भूरिसङ्ख्ययोः संपदात्मकः । अष्टमी तु महालक्ष्मीर्ब्राह्म्याद्याः सप्त मातरः ॥ ५२३ ॥ आवृतो यस्य तिष्ठन्ति सोऽष्टमातृसमावृतः । अष्टभैरवसेव्योऽष्टौ भैरवा वटुकादयः ॥ ५२४ ॥ तैः सेव्यो वसवोऽष्टौ तु प्रभासांता धरादयः । तैर्वन्दितो भवानष्टवसुवंद्यः प्रकीर्तितः ॥ ५२५ ॥ भूतानि पुष्पवन्तौ स्व एतद्रूपोऽष्टमूर्तिभृत् ।[1] अष्टाचक्रा नवद्वारा देवानां पूरिति श्रुतेः ॥ ५२६ ॥ यंत्रे तिष्ठन्नष्टचक्रस्फुरन्मूर्तिरिति स्मृतः । लाजेक्षुसक्तुचिपिटाः कदल्यो (कलमा)मोदकास्तिलाः ॥ ५२७ ॥ नारिकेला घृताक्ता इत्यष्टद्रव्यहविःप्रियः । नवनागासनाध्यासी नागैः कर्कोटकादिभिः ॥ ५२८ ॥ पत्रेष्वष्टसु मध्ये च यस्यासनमधिष्ठितम् । शासच्छंखमुकुन्दादीन् नवनिध्यनुशासिता ॥ ५२९ ॥ नवद्वारपुराधारो जीवरूपेण देहभृत् । कुलाकुलसहस्रारे मूलाद्याज्ञान्तिमानि षट् ॥ ५३० ॥ लंबिकेति नवस्वास्से नवाधारनिकेतनः । धर्माद्यनन्तबदरी-रूपशङ्करसुन्दरैः ॥ ५३१ ॥ लक्ष्म्या साध्येनोपपदैर्युक्ता नारायणा नव ।

1. बिन्द्वादिसह जान्तःस्थब्रह्मरू पोऽष्टमूर्तिभृत् ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



नवनारायणस्तुत्यस्तैः स्तुत्यः स भवानिति॥ ५३२ ॥ दुर्गाया नवकूष्माण्डचन्द्रघण्टादयोऽभिधाः। प्रसिद्धास्ताभिरीड्यत्वान्नव-दुर्गानिषेवितः ॥ ५३३ ॥ ज्ञानप्रकाशसत्यानन्द विमर्शस्वभाव-सुभगानाम्। नवनाथमहानाथो नाथत्वात्प्रतिभपूर्णयोश्च भवान् ॥ ५३४ ॥ कर्कोटकादिमण्ड्यत्वान्नवनागविभूषणः । नवरत्न-विचित्राङ्गो वज्रमुक्तादिभूषितः ॥ ५३५ ॥ तीव्राद्या नव ते पीठे नवशक्तिशिरोधृतः ।

दशात्मको दशभुजो दशदिक्पतिवन्दितः ।
दशाध्यायो दशप्राणो दशेन्द्रियनियामकः ॥ १५१ ॥

दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः ।
एकादशादिभी रुद्रैः स्तुत एकादशाक्षरः ॥ १५२ ॥

द्वादशोद्दण्डदोर्दण्डो द्वादशान्तनिकेतनः ।
त्रयोदशाभिधा भिन्नविश्वेदेवाधिदैवतम् ॥ १५३ ॥

दिशो दश तदात्मा यो व्यापकः स दशात्मकः[1] ॥ ५३६ ॥ महागणपतेर्मूर्त्या भवान् दशभुजोऽभवत्। इन्द्रादयोऽष्टौ दिक्पाला ऊर्ध्वाधोदिगधीश्वरौ ॥ ५३७ ॥ क्रमाद्ब्रह्माऽनन्त इति दशदिक्पति-वन्दितः। दशाध्यायश्चतुर्वेद षडङ्गाद्यध्ययनान्मतः[2] ॥ ५३८ ॥ दशप्राणः पंच पंच प्राणनागादिरूपवान् ॥ वागाद्यात्मत्वगाद्यात्म-दशेन्द्रियनियामकः ॥ ५३९॥ उक्तो हस्तिपिशाचीतिमन्त्रश्चेत्प्रण-

1. बिन्द्वाद्ययोगपर्यन्ताः आत्मनः स्थितिरूपकाः ।
दश तदात्मा भगवान्गणेशानो दशात्मकः ॥

2. विनायकरहस्ये तु योगानन्दाभिधं वरम् ।
दशाध्याययुतं तत्र दशाध्यायस्तदात्मकः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



वादिमः । दशाक्षरमहामन्त्रस्त्वद्दैवत्यस्त्वमेव सः ॥ ५४० ॥ दशदिग्व्यापिदेहत्वाद्दशाशाव्यापिविग्रहः । रुद्रा एकादशारभ्य सहस्राणि सहस्रशः ॥ ५४१ ॥ एकादशादिभी रुद्रैः स्तुतस्तैः सकलैर्नुतः । तारशक्ती विघ्नशक्ती वशमानय ठद्वयम् ॥ ५४२ ॥ एकादशाक्षरो मन्त्रस्त्वद्दैवत्यस्त्वमेव सः । द्वादशोद्दंडदोर्दंडो गाढैर्द्वादशभिर्भुजैः ॥ ५४३ ॥ द्वादशान्तं ललाटोर्ध्वं ब्रह्मरंध्रावसानकम् । प्रकटो योगिनां तद्वो द्वादशान्तनिकेतनः ॥ ५४४ ॥ पुरूरवप्रभृतिभिः पूज्यस्त्वं विश्वदैवतैः । त्रयोदशाभिधाभिन्नविश्वेदेवाधिदैवतम् ॥ ५४५ ॥

**चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ।**
**चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ॥ १५४ ॥**

**सामपंचदशः पंचदशीशीतांशुनिर्मलः ।**
**षोडशाधारनिलयः षोडशस्वरमातृकः ॥ १५५ ॥**

**षोडशान्तपदावासः षोडशेन्दुकलात्मकः ।**
**कला सप्तदशी सप्तदशः सप्तदशाक्षरः ॥ १५६ ॥**

चतुर्दशानामिन्द्राणां मनूनां वरदोऽधिपः । चतुर्दशेंद्रवरदश्चतुर्दशमनुप्रभुः ॥ ५४६ ॥ चतुर्दशादिविद्याढ्यो वेदाद्याः सोपवेदकाः । चतुर्दशाष्टादश च प्रसिद्धास्तासु पण्डितः ॥ ५४७ ॥ आपातालादा च सत्याच्चतुर्दशजगत्प्रभुः । यत्पंचदशभिः स्तौमैराज्य(द्य) स्तोत्रचतुष्टयम् ॥ ५४८ ॥ सामयुक्तं तदात्मत्वात् सामपंचदशो भवान् । स्वच्छो राकेन्दुवत्पञ्चदशीशीतांशुनिर्मलः ॥ ५४९ ॥ षोडशाधारनिलयोऽस्यंतश्च क्रेषु संस्थितः । षडाधारनवाधारषोडशाधारलक्षणम् ॥ ५५० ॥ वेद्यं गुरुमुखादेवेत्यागमे शिवशासनम् । स्वरान्मिमीते मानेन षोडशस्वरमातृकः ॥ ५५१ ॥ षोडशांतपदावासो

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



ब्रह्मरंध्राब्जकर्णिकाम् । आरभ्योर्ध्वं षोडशांतमुन्मन्याः परतः स्थितः ।। ५५२ ।। अमृता मानिनी(मानदे)त्यादिषोडशेन्दुकलात्मकः । कला सप्तदशी नाम प्रसिद्धा त्रिपुरागमे ।। ५५३ ।। त्रयोदशाक्षरी तुर्यविद्याख्या त्वं तदात्मकः । यत्तु सप्तदशस्तोमं पृष्ठस्तोत्रचतुष्टयम् ।। ५५४ ।। सामयुक्तं तदात्मत्वाद्भवान् सप्तदशो मतः । वौषडाश्रावययजास्तु-श्रौषड्येयजामहे ।। ५५५ ।। इति त्वं आप्नुषे यज्ञानिति सप्तदशाक्षरः ।

**अष्टादशद्वीपपतिरष्टादशपुराणकृत् ।**
**अष्टादशौषधीसृष्टिरष्टादशविधिः स्मृतः ।। १५७ ।।**

**अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ।**
**एकविंशः पुमानेकविंशत्यंगुलिपल्लवः ।। १५८ ।।**

**चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ।**
**सप्तविंशतितारेशः सप्तविंशतियोगकृत् ।। १५९ ।।**

अष्टादशद्वीपपतिः सप्तैकादशसंख्ययोः ।। ५५६ ।। द्वीपो-पद्वीपयोर्जंबुसिंहलाद्योरधीश्वरः । मात्स्यकौर्मब्राह्मपाद्माद्यष्टादशपुराण कृत्[1] ।। ५५७ ।। अष्टादशौषधीसृष्टिर्धान्यसृष्टिविचक्षणः । मुख्य-धान्योपधान्यानि तेषु द्वादश षट् क्रमात् ।। ५५८ ।। विधयोऽपूर्वनियम परिसंख्याः पृथक् पृथक् । प्रयोगविनियोगोत्पत्त्याख्याभिर्नव ते द्विधा ।।५५९।। गुणप्रधानभेदादित्यष्टादशविधिः स्मृतः । नागरद्राविडांध्राद्याः स्वतंत्रा लिपयो भुवि ।। ५६० ।। अष्टादश तदंशोत्था अवान्तरभिदा अपि । देशभेदेन बहवस्तज्ज्ञाने त्वं विचक्षणः ।। ५६१ ।। अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः । एकविंशः पुमानात्मेत्यामनं-

1. अष्टादशप्रभेदाढ्यपुराणोपपुराणयोः ।
कर्ता गणेश पूर्वाणां अष्टादश पुराणकृत् ।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



षण्णवतिः प्रोक्ताः श्रीचक्रदेवताः ॥ ५८२ ॥ विद्यागणेशयोर्योगाज्जायन्तेऽधिकदेवताः । तासामीशः समस्तानां षण्णवत्यधिकप्रभुः[1] ॥ ५८३ ॥ शतानन्दः शतगुणा आनन्दा मानुषादयः । ब्रह्मानन्दादिमा ये ये ते सर्वेऽपि त्वदात्मकाः ॥ ५८४ ॥ ब्रह्माण्डानामनन्तानां धर्ता शतधृतिर्भवान् । पद्मपत्रायताक्षस्त्वं शतपत्रायतेक्षणः ॥ ५८५ ॥ शतानीको भूरिसैन्यः शक्रः शतमखो भवान् । अथवा बहुसंख्यानि पूजनादीनि यस्य सः ॥ ५८६ ॥ शतं धारा अरास्तीक्ष्णा यदायुधवरस्य सः । वज्रोत्कृष्टायुधो वाऽपि शतधारवरायुधः॥ ५८७॥ सहस्रपत्रनिलयो ब्रह्मरन्ध्रस्थपद्मगः । फणासहस्रवद्भूष्यः सहस्रफणभूषणः ॥ ५८८ ॥ सहस्रशीर्षा पुरुष इत्येकं नाम ते स्फुटम् । (सहस्रशीर्षा पुरुषो विराट्पुरुषरूपवान्।) अनंतनेत्रचरणः सहस्राक्षः सहस्रपात्॥ ५८९॥

**सहस्रनामसंस्तुत्यः सहस्राक्षबलापहः ।**
**दशसाहस्रफणभृत्फणिराजकृतासनः ॥ १६७ ॥**

**अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रयंत्रितः ।**
**लक्षाधीशप्रियाधारो लक्षाधारमनोमयः ॥ १६८ ॥**

**चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः ।**
**चतुरशीतिलक्षाणां जीवानां देहसंस्थितः ॥ १६९ ॥**

**कोटिसूर्यप्रतीकाशः कोटिचंद्रांशुनिर्मलः ।**
**शिवाभवाध्युष्टकोटिविनायकधुंरधरः ॥ १७० ॥**

सहस्रनामसंस्तुत्यः स्तुत्यर्होऽसंख्यनामभिः । यमाविशन्ति नामानि सर्वाणीति किल श्रुतेः ॥ ५९० ॥ इन्द्रस्य दर्पहरणात्

1. **अष्टाचत्वारिंशद्देवाः स्वानन्दे ब्रह्मणस्पतेः ।**
**विघ्नसिद्धिबुद्धियोगात् जायन्तेऽधिकदेवताः ॥**
**तासामीशः समस्तानां षण्णवत्यधिकप्रभुः ।**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सहस्राक्षबलापहः । दशसाहस्रफणभृत्फणिराजकृतासनः[1] ॥ ५९१ ॥ इच्छया सृष्टिनिर्मातुः किमसाध्यं तव प्रभो । सर्वविद्या-कलाराशिरक्षणैकप्रयोजनाः ॥ ५९२ ॥ विष्णुना हिमवत्पृष्ठे स्थापिता गृहमेधिनः । पुराणे वैष्णवे प्रोक्तास्तैः स्तुत्योऽसि नियंत्रितः[2] ॥ ५९३॥ अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रयंत्रितः । लक्षाधीशप्रियाधारो लक्षाधीशा धनेश्वराः ॥ ५९४ ॥ तेषां प्रियः सन्नाधारो धनवृद्ध्यर्थमाश्रितः । लक्षाणि चित्तस्थैर्यार्थं प्रसिद्धानि तदाश्रितम् ॥ ५९५॥ मनो यस्य तदात्मा त्वं लक्षाधारमनोमयः । चतुर्लक्षजपप्रीतः पुरश्चर्यादिसाधनैः ॥५९६ ॥ पुराणाष्टादशग्रंथसंख्या लक्षचतुष्टयम् । तैः प्रकाशितरूपस्त्वं चतुर्लक्षप्रकाशितः॥ ५९७ ॥ सर्वजीवात्मतेयत्तानवच्छेदश्च रोचिषः। कलंकतापासंपर्कः कथ्यते नामभिस्त्रिभिः ॥ ५९८ ॥ चतुरशीतिलक्षाणां जीवानां देहसंस्थितः । कोटिसूर्य-प्रतीकाशः कोटिचंद्रांशुनिर्मलः ॥ ५९९॥ ग्रहा विनायकाभिख्याः सार्धकोटित्रयात्मकाः । भवस्य च शिवायाश्च प्रत्येकं सन्ति तत्पतिः ॥ ६०० ॥ शिवाभवाध्युष्टकोटिविनायकधुरंधरः ।

**सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः ।**
**त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥ १७१ ॥**

**अनन्तनामानन्तश्रीरनन्तानन्तसौख्यदः ।**

विश्वरूपस्य तेऽङ्गानि सर्वमन्त्राधिदेवताः ॥ ६०१ ॥ अतः सञ्जप्तमन्त्रैस्तैर्द्योतसेऽवयवैरपि । सप्तकोटिमहामंत्रमंत्रितावयवद्युतिः ॥ ६०२ ॥ ईदृशान्नाधिकस्त्वत्तः कोऽपि देवस्ततो भवान् ।

1. आसनं यस्य शेषस्तु तेनैवं कथ्यसे भवान् ।
2. वेदादिविद्याद्रष्टारो गोत्र वृद्धिकरा अपि ।
अष्टाशीति सहस्रौघास्तैः कृतस्तोत्रतोषितः ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥ ६०३ ॥ अनन्तनामा सर्वेऽपि शब्दास्त्वन्नामतां गताः । यावत्प्रतिष्ठितं ब्रह्म तावती वागिति श्रुतेः ॥ ६०४ ॥ अनन्तश्रीरसंख्यास्ते विद्यासंपत्तिकीर्तयः । प्रातिस्विकमनन्तानामानन्त्ये गणना तु या ॥ ६०५ ॥ तावन्तं दददानन्दमनन्तानन्तसौख्यदः । अनन्तानन्ददानं तु स्वाद्वैते पर्यवस्यति ॥ ६०६ ॥

(उत्तराङ्गन्यासः - गांहृदयाय नमः गीं शिरसे स्वाहा, गूं शिखायै वषट्, गैं कवचाय हुं, गौं नेत्रत्रयाय वौषट्, गः अस्त्राय फट्।

भूर्भुवः सुवरोमिति दिग्विमोकः ॥

पञ्चवक्त्रो दशभुजो ललाटेन्दुः शशिप्रभः ।
मुण्डमालः सर्पभूषो मुकुटांगदभूषणः ॥
अग्न्यर्कशशिनो भाभिः तिरस्कुर्वन् दशायुधः ।
सर्वविघ्नहरो देवः तं ध्यायामि दिवानिशम् ॥

लं पृथिव्यात्मने महागणपतये गन्धं समर्पयामि ।
हं आकाशात्मने महागणपतये पुष्पाणि समर्पयामि ।
यं वाय्वात्मने महागणपतये धूपमाघ्रापयामि ।
रं अग्न्यात्मने महागणपतये दीपं दर्शयामि ।
वं अमृतात्मने महागणपतये अमृतोपहारं निवेदयामि ।

गुह्यातिगुह्यगोप्ता त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ॥)

इति वैनायकं नाम्नां सहस्रमिदमीरितम् ॥ १७२ ॥
इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः ।
करस्थं तस्य सकलमैहिकामुष्मिकं सुखम् ॥ १७३ ॥
आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः ।
मेधा प्रज्ञा धृतिः कांतिः सौभाग्यमतिरूपता ॥ १७४ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशीलता ।
जगत्संयमनं विश्वसंवादो वादपाटवम् ।। १७५ ।।
सभापाण्डित्यमौदार्यं गांभीर्यं ब्रह्मवर्चसम् ।
औन्नत्यं च कुलं शीलं प्रतापो वीर्यमार्यता ।। १७६ ।।
ज्ञानं विज्ञानमास्तिक्यं स्थैर्यं विश्वातिशायिता ।
धनधान्याभिवृद्धिश्च सकृदस्य जपाद्भवेत् ।। १७७ ।।
वश्यं चतुर्विधं नृणां जपादस्य प्रजायते ।
राज्ञो राजकलत्रस्य राजपुत्रस्य मंत्रिणः ।। १७८ ।।
जप्यते यस्य वश्यार्थं स दासस्तस्य जायते ।
धर्मार्थकाममोक्षाणामनायासेन साधनम् ।। १७९ ।।
शाकिनीडाकिनीरक्षोयक्षोरगभयापहम् ।
साम्राज्यसुखदं चैव समस्तरिपुमर्दनम् ।। १८० ।।
समस्तकलहध्वंसि दग्धबीजप्ररोहणम् ।
दुःस्वप्रनाशनं क्रुद्धस्वामिचित्तप्रसादनम् ।। १८१ ।।
षट्कर्माष्टमहासिद्धित्रिकालज्ञानसाधनम् ।
परकृत्याप्रशमनं परचक्रविमर्दनम् ।। १८२ ।।
सङ्ग्रामरङ्गे सर्वेषामिदमेकं जयावहम् ।
सर्ववन्ध्यात्वदोषघ्नं गर्भरक्षैककारणम् ।। १८३ ।।
पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् ।
देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ।। १८४ ।।
न तद्गृहं जहाति श्रीर्यत्रायं पठ्यते स्तवः ।
क्षयकुष्ठप्रमेहार्शोभगंदरविषूचिकाः ।। १८५ ।।
गुल्मं प्लीहानमश्मानं अतिसारं महोदरम् ।
कासं श्वासमुदावर्तं शूलशोफादिसंभवम् ।। १८६ ।।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



शिरोरोगं वमिं हिक्कां गण्डमालामरोचकम् ।
वातपित्तकफद्वन्द्व त्रिदोषजनितज्वरम् ॥ १८७ ॥
आगन्तुं विषमं शीतमुष्णं चैकाहिकादिकम् ।
इत्याद्युक्तमनुक्तं वा रोगं दोषादिसंभवम् ॥ १८८ ॥
सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपः ।
सकृत्पाठेन संसिद्धः स्त्रीशूद्रपतितैरपि ॥ १८९ ॥
सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये ।
महागणपतेः स्तोत्रं सकामः प्रजपन्निदम् ॥ १९० ॥
इच्छितान्सकलान् भोगानुपभुज्येह पार्थिवान् ।
मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ॥ १९१ ॥
चन्द्रेन्द्रभास्करोपेन्द्रब्रह्मशर्वादिसद्मसु ।
कामरूपः कामगतिः कामतो विचरन्निह ॥ १९२ ॥
भुक्त्वा यथेप्सितान् भोगानभीष्टान् सह बन्धुभिः ।
गणेशानुचरो भूत्वा महागणपतेः प्रियः ॥ १९३ ॥
नन्दीश्वरादिसानन्दी नन्दितः सकलैर्गणैः ।
शिवाभ्यां कृपया पुत्रनिर्विशेषं च लालितः ॥ १९४ ॥
शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः ।
जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते ॥ १९५ ॥
निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः ।
योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंस्थितः ॥ १९६ ॥
निरन्तरोदितानन्दे परमानन्दसंविदि ।
विश्वोत्तीर्णे परे पारे पुनरावृत्तिवर्जिते ॥ १९७ ॥
लीनो वैनायके धाम्नि रमते नित्यनिर्वृतः ।
यो नामभिर्हुनेदेतैरर्चयेत्पूजयेन्नरः ॥ १९८ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



राजानो वश्यतां यान्ति रिपवो यान्ति दासताम् ।
मन्त्राः सिद्ध्यन्ति सर्वेऽपि सुलभास्तस्य सिद्धयः॥१९९॥
मूलमन्त्रादपि स्तोत्रमिदं प्रियतरं मम ।
नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि ॥ २०० ॥
दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत् ।
अष्टद्रव्यैर्विशेषेण जुहुयाद्भक्तिसंयुतः ॥ २०१ ॥
तस्येप्सितानि सर्वाणि सिद्ध्यन्त्यत्र न संशयः ।
इदं प्रजप्तं पठितं पाठितं श्रावितं श्रुतम् ॥ २०२ ॥
व्याकृतं चर्चितं ध्यातं विमृष्टमभिनंदितम् ।
इहामुत्र च सर्वेषां विश्वैश्वर्यप्रदायकम् ॥ २०३ ॥
स्वच्छंदचारिणाप्येष येनायं धार्यते स्तवः ।
स रक्ष्यते शिवोद्भूतैर्गणैरध्युष्टकोटिभिः ॥ २०४ ॥
पुस्तके लिखितं यत्र गृहे स्तोत्रं पूपूजयेत् ।
तत्र सर्वोत्तमा लक्ष्मीः सन्निधत्ते निरन्तरम् ॥ २०५ ॥
दानैरशेषैरखिलैर्व्रतैश्च तीर्थैरशेषैरखिलैर्मखैश्च ।
न तत्फलं विन्दति यद्गणेशसहस्रनाम्नां स्मरणेन सद्यः ॥२०६॥
एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं प्रोज्जिहाने
सायं मध्यंदिने वा त्रिषवणमथवा संततं वा जनो यः ॥
स स्यादैश्वर्यधुर्यः प्रभवति च सतां कीर्तिमुच्चैस्तनोति
प्रत्यूहं हन्ति विश्वं वशयति सुचिरं वर्धते पुत्रपौत्रैः ॥ २०७ ॥
अकिञ्चनोऽपि मत्प्राप्तिचिन्तको नियताशनः ।
जपेत्तु चतुरो मासान् गणेशार्चनतत्परः ॥ २०८ ॥
दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि ।
लभते महतीं लक्ष्मीमित्याज्ञा पारमेश्वरी ॥ २०९ ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



आयुष्यं वीतरोगं कुलमतिविमलं संपदश्चार्तदानाः
कीर्तिर्नित्यावदाता भणितिरभिनवा कान्तिरव्याधिभव्या।
पुत्राः सन्तः कलत्रं गुणवदभिमतं यद्यदेतच्च सत्यं
नित्यं यः स्तोत्रमेतत्पठति गणपतेस्तस्य हस्ते समस्तम् ॥ २१०॥

लघुसहस्रनामस्तोत्रम्

गणञ्जयो गणपतिर्हेरंबो धरणीधरः।
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ॥ २११ ॥
अमोघसिद्धिरमि(मृ)तो मन्त्रश्चिन्तामणिर्निधिः।
सुमङ्गलो बीजमाशापूरको वरदः शिवः ॥ २१२ ॥
काश्यपो नन्दनो वाचासिद्धो ढुण्ढिविनायकः।
मौदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ॥ २१३ ॥
यः स्तौति मद्गतमना मदाराधनतत्परः।
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः ॥ २१४ ॥
नमो नमः सुरवरपूजिताङ्घ्रये
नमो नमो निरुपमङ्गलात्मने।
नमो नमो विपुलपदैकसिद्धये
नमो नमः करिकलभाननाय ते ॥ २१५ ॥

अस्य स्तोत्रस्य जप ऐहिककामस्यामुष्मिककामस्य निष्कामस्य चेति त्रिविधः। तत्र प्रथममाह आयुरित्यादिभिः। प्रज्ञा ग्राहिणी बुद्धिः, मेधा धारणावती बुद्धिः, क्षमा परापकारप्रतीकारक्रियाभावः, क्षांतिः परकृतापकारप्रयुक्त-क्रोधस्याप्यभावः, ज्ञानं मोक्षजनकचरमवृत्तिः, विज्ञानं शास्त्रशिल्पविषयकं शास्त्रम् ॥ १७२-१७६ ॥ दग्धस्य रोगाग्निप्लुष्टस्य बीजस्य रेतसः प्ररोहणं प्रजोत्पादनसामर्थ्यप्रदम् ॥ षट्कर्माणि-मोहनमाकर्षणं स्तंभनं विद्वेषणमुच्चाटनं मारणं चेति भेदात्। शान्तिवश्ययोस्तन्त्रेषु षट्कर्ममध्ये परिगणनेऽपि प्रकृते तयोः पार्थक्येन निर्देशान्मोहनाकर्षणे मेलिते। परकृत्या शत्रुभिः स्वमारणोद्देशेन निर्मिता राक्षसी ॥ १७७-१८२ ॥ नंदीश्वरादिसानंदी नंदिकेश्वरादिसमानानन्दशाली, शिवाभ्यां गौरीहराभ्यां पुत्रनिर्विशेषं पुत्रतुल्यं यथा तथा ॥ शिवभक्तः ईश्वरभक्तः।

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



जीवः शिवश्चेति चिद्विभागांतर्गतोऽत्र शिवो विवक्षितः, न तु कैलासवासित्वादि-गुणबिशेषविशिष्टो गाणपत इति यावत् जातिस्मरः पूर्वजन्मस्मरणवान् ॥ १८३-१९४ ॥ लीनः जीवोपाधिलयात् । नभस्ये भाद्रपदे, नामभिः पूजायां चतुर्थीनमोन्तैः, तर्पणे द्वितीया, तर्पयाम्यंतैः होमे चतुर्थीस्वाहांतैरित्यर्थः । प्रजप्तं उपांशूच्चरितं, पठितं उच्चैर्व्यक्तमुच्चरितम्, व्याकृतं व्याख्यातं, चर्चितं ऊहापोहविषयीकृतं, ध्यातं मनसा विचारितं, विमृष्टं शोधितं, लेखकदोषनिरासेनेति यावत्; अभिनन्दितमनुमतम् । शिवोद्भूतैः शिवेन शिवया च जनितैः अध्युष्टकोटिभिः प्रत्येकं सार्धकोटित्रयसंख्याकैः । आर्तेभ्यो दानं यासां ता आर्तदानाः, नित्यावदाताः चिरस्थायित्वे सति शुद्धा अभिनवाः परैरकल्पिताः । एतेष्वष्टादशनामानि पूर्वं व्याख्यातान्येव; तत्र गणपतिरिति गणेश्वरगणाधिपादिनामसमानार्थकं, अमित इत्यत्रामृत इति वा पाठः, उभयथापि व्याख्यातमेव ॥ १९५-२११ ॥ सुमंगलसुमंगल इति नाम्ना सुमंगलनाम चरितार्थम्, वरप्रद इत्यनेन वरदनाम, चिंतामणिः शिवो बीजमिति नामत्रयं त्विहापूर्वं तत्र क्षेत्रविशेषाधिष्ठातृगणपतेश्चिंतामणिरिति संज्ञा चिंतितार्थप्रदत्वात्स्व-र्गस्थचिंतामणिवत्, तद्दैवत्यमंत्रविशेषस्याप्येषा संज्ञा तद्रूपत्वाद्देवोऽपि चिंतामणिः । शिवस्य तु वश कांतौ शिवः स्मृत्या इति जगदुत्पादनेच्छाशक्तिमत्त्वादयो बहवोऽर्थाः । बीजं-सर्वजगत्कारणं, काश्यपः कश्यपपुत्रः, इयं च कथा गणेशपुराणे उत्तरखंडे प्रसिद्धा, धरणीधर आशापूरक इत्यादिनाममूलभूताः कथा अपि तत्रैवानुसंधेयाः, ग्रन्थान्ते मङ्गलमाचरति नमो नम इति । विपुलपदं परं धाम तस्य मुख्या सिद्धिर्यस्मात्सः, (२१२-२१५)

*इति श्रीगणेशोपपुराणे उपासनाखण्डे महागणपति प्रोक्तं*
*सहस्रनामस्तोत्रं नाम षट्चत्वारिंशोऽध्यायः ।*

॥ श्रीगणेशार्पणमस्तु ॥

॥ श्रीरस्तु ॥

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



# ஸ்ரீ மஹாகணபதி ஸஹஸ்ர நாம ஸ்தோத்திரம்

## (தமிழுரையுடன்)

வ்யாஸ உவாச-
கதம் நாம்நாம் ஸஹஸ்ரம் ஸ்வம் கணேஶ உபதிஷ்டவான்।
ஶிவாயைதந் மமாசக்ஷ்வ லோகாநுக்ரஹதத்பர 1

ப்ரம்ஹோவாச
தேவ ஏவம் புராராதி: புரத்ரய ஜயோத்யமே।
அநர்சநாத் கணேஶஸ்ய ஜாதோ விக்க்நாகுல: கில। 2

மநஸா ஸ விநிர்த்தார்ய ததஸ் தத்விக்க்நகாரணம்।
மஹாகணபதிம் பக்த்யா ஸமப்ப்யர்ச்ய யதாவிதி। 3

விக்க்நப்ரஶமநோபாயம் அப்ருச்ச்சதபராஜித:।
ஸந்துஷ்ட: பூஜயா ஶம்போ: மஹாகணபதி: ஸ்வயம்॥ 4

ஸர்வவிக்க்நைக ஹரணம் ஸர்வகாமபலப்ரதம்।
ததஸ்தஸ்மை ஸ்வகம் நாம்நாம் ஸஹஸ்ரமிதமப்ரவீத்॥ 5

வியாஸர் கேட்கிருர் - உலகின் நன்மையைக் கருத்தில் கொண்டவரே! ஸ்ரீகணேசர் சிவபெருமானுக்குத் தன் பேராயிரத்தை உபதேசித்த முறையை விளக்குவீர்!

பிரும்மா கூறினார் - சிவபெருமான் முப்புரங்களே வெல்ல முற்பட்டபோது முன்னதாக கணேசரை வழிபடாததால் போரில் தடை ஏற்பட்டதால் கலங்கியவராகத் தடைக்குக் காரணத்தை மனத்தில் யோசித்து உறுதிப்படுத்திக் கொண்டு மஹாகணபதியை வழிபட்டுத் தடை நீங்க வழிகாட்டக் கோரினார். அவரது வழிபாட்டில் மனநிறைவு பெற்ற மஹா கணபதி எல்லா விக்கினங்களேயும் நீக்கி விரும்பியதனேத்தையும் தரவல்ல தனது பேராயிரத்தை உபதேசித்தார்''.

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



## ஸஹஸ்ர நாம பாராயண முறை

துதியாகவும் மந்திரமாகவும் பயன்படுவதால் அதனை உபதேசித்த குரு, அது அமைந்த சந்தம், அதன் தேவதை இவர்களை முன் நினைத்து, உடல் மனத்தூய்மை பெற மந்திராக்ஷரங்களால் அங்கங்களைப் புனிதமாக்கிக் காப்பு செய்து, தேவதையின் வடிவத்தை உள்ளத்தில் பதித்து மனத்தளவில் வழிபட்டுப் பின் ஸ்தோத்ர பாராயணம் செய்வது மரபு. அதனையொட்டிய முறை பின்வருமாறு-

அஸ்ய ஸ்ரீமஹாகணபதி ஸஹஸ்ரநாம ஸ்தோத்ர மஹாமந்த்ரஸ்ய, கணேஶ: ருஷி: (நெற்றியில்) அனுஷ்ட்டுப் ச்சந்த: (முகவாயில்) மஹாகணபதி: தேவதா, (இதயத்தில்) கம் பீஜம் (வலது மார்பில் அல்லது தோளில்) தும் கம் ஶக்தி:, (இடது மார்பில் அல்லது தோளில்) ஸ்வாஹா கீலகம் (நடுமார்பில் அல்லது தொப்புளில்), ஸ்ரீமஹாகணபதி ப்ரீத்யர்த்தே நாமபாராயணே விநியோக: (இரு கைகள் கூப்பி) காம் அங்குஷ்ட்டாப்ப்யாம் நம: (ஆள்காட்டி விரல்களின் நுனியால் கட்டை விரல்களை வருட) கீம் தர்ஜநீப்ப்யாம் நம: (கட்டை விரல்நுனிகளால் ஆள்காட்டி விரல்களை வருட) கூம் மத்த்யமாப்ப்யாம் நம: (கட்டை விரல்களின் நுனியால் நடுவிரல்களை வருட) கைம் அநாமிகாப்ப்யாம் நம: (கட்டை விரல்களின் நுனியால் மோதிரவிரல்களை வருட) கௌம் கனிஷ்டிகாப்ப்யாம் நம: (கட்டை விரல்களின் நுனியால் சுண்டுவிரல்களை வருட) க: கரதலகரப்ருஷ்ட்டாப்ப்யாம் நம: (இரு கரங்களாலும் கரங்களின் உள்ளும் புறமும் தடவித்தூய்மை பெற்றதாக உணர்ந்து) காம் ஹ்ருதயாய நம: (வலது நடுமூன்று விரல்களால் இதயத்தைத் தொட்டு) கீம் ஶிரஸே ஸ்வாஹா (நடு வலது மோதிரவிரல்களால் சிரசைத்தொட்டு) கூம் ஶிகாயை வஷட் (வலது கட்டை விரலால் சிகை முடிப்பை (பின் தலையின் நடுவை)த் தொட்டு) கைம் கவசாய ஹும் (இருகைகளால் குறுக்கே மாற்றி இருபுஜங்களைத் தொட்டு) கௌம் நேத்ரத்ரயாய வௌஷட் (வலது நடு மூன்று விரல்களைக் கொண்டு இரு கண்களையும் புருவத்தையும் தொட்டு உள்ளும் புறமும் தூயதாக்கி) க: அஸ்த்ராயப்பட்

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



(ஆள்காட்டிவிரலால் உள்ளங்கையில் அடித்துச் சத்தப்படுத்தி) பூர்ப்பு வஸ்ஸுவரோம் (வலது கை விரல்களைச் சொடுக்கிக் கொண்டே வலது தோள்வழியே தலையைச் சுற்றி இடது உள்ளங்கையில் தட்டித் தன்னைச் சுற்றிக் காப்பு ஏற்படுத்தித் தியானம் செய்ய)

பஞ்சவக்த்ரோ தஶபுஜோ லலாடேந்து: ஶஶிப்ரப: ।
முண்டமால: ஸர்பபூஷோ முகுடாங்கத பூஷண: ।
அக்ந்யர்கஶஶிநோ பாபி: திரஸ்குர்வந் தசாயுத: ।
ஸர்வவிக்க்நஹரோ தேவ: தம் த்யாயாமி திவாநிஶம் ॥

(ஐந்து முகத்தர், பத்து கைகளுள்ளவர், நெற்றியில் பிறை சூடியவர், நிலவொளிபோன்று ஒளிர்பவர், மண்டை யோட்டு மாலை (தேங்காய்) பூண்டவர். பாம்பணி பூண்டவர், கிரீடமும் தோள்வளைகளும் அணிந்தவர், தன் ஒளியால் அக்னி-சூர்ய-சந்திரர்களை ஒளி குறையச் செய்பவர், பத்து ஆயுதங்கள் ஏந்தியவர், எல்லாத் தளைகளையும் நீக்குபவர். இந்த தேவனை இரவும் பகலும் தியானிப்பேன்)

(என்று தியானித்து) லம் ப்ருதிவ்யாத்மநே கந்த்தம் ஸமர்பயாமி (பூமி தத்துவ உருவான உமக்கு நறுமணப்பூச்சைத் தருகிறேன்) ஹம் ஆகாஶாத்மநே புஷ்பாணி ஸமர்பயாமி) (ஆகாச தத்துவ வடிவினருக்கு புஷ்பங்களைத் தருகிறேன்) யம் வாய்வாத்மநே தூபம் ஆக்க்ராபயாமி, (வாயுதத்துவ வடிவினரை நறுமணப்புகை முகரச்செய்கிறேன்). ரம் அக்ந்யாத்மநே தீபம் தர்ஶயாமி (அக்னி தத்துவடிவினருக்குத் தீபம் காட்டுகிறேன்) வம் அம்ருதாத்மநே அம்ருதோபஹாரம் நிவேதயாமி. (இனிய நீர் வடிவினருக்கு இனிய உணவை முன் வைக்கிறேன்) ஸம் ஸர்வாத்மநே ஸர்வோபசாரபூஜாஸ் ஸமர்ப்யாமி (எல்லாமானவருக்கு எல்லாப் பணிவிடைகளையும் புரிகிறேன்) என்று மனதில் வழிபட்டுப் பின் ஸ்தோத்திரம் படிக்கத் தொடங்குவர்.

**கணேஶ்வரோ கணக்ரீடோ கணநாதோ கணாதிப: ।**
**ஏகதம்ஷ்ட்ரோ வக்ரதுண்டோ கஜவக்த்ரோ மஹோதர: ॥ 6.**

https://archive.org/details/muthulakshmiacademy

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy



1. கணேஸ்வர:- கணங்களும் அவற்றை ஆள்பவருமானவர். கணம் - தொகுப்பு, இனம், வகை, வகுப்பு. கணங்கள் பல உண்டு

(1) பரம்பொருள் தனித்திருந்தது, அதுவே தன் சக்தியைத் தனித்து வெளிப்படுத்தியது. உலகத்தைப் படைக்க எண்ணியது. படைப்பவரும் படைக்கப்பெறுவதும் படைப்புமாக, படைத்ததைக் காப்பவரும் காக்கப்பெறுவதும், காப்புமாக, படைத்துக் காத்ததை உருமாற்றிப் புதுப்பிக்க ஒடுக்கு பவரும் ஒடுக்கப்படுவதும் ஒடுக்கமுமாக, ஒடுக்கியதைத் தன்னுள் அடக்கிக்கொள்ள, தான் மட்டுமே மீதமாகித் தன்னுள் தன்னைக்கண்டு ஸத்சித் ஆனந்தமாக எனப்பல பணிகள் நேரிட்டன, அதற்காக பிரும்மா (படைப்பவர்) விஷ்ணு (காப்பவர்) ருத்ரர் (ஒடுக்குபவர்) ஈச்வரர் (உருக்குலைத்து மறைப்பவர்) ஸதாசிவர் (தன்னுள் மறைந்ததைத் தானாக்கி அருள்பவர்) என்ற ஐந்து தேவர்களாக ஒரு கணம் தோன்றிற்று.

(2) படைப்பவருக்கு உதவப் ப்ரக்ருதி என்று படைக்கப்படுவதின் மூலதத்துவமும், அதன் விளக்கமாக - உலகாகப் பல்கிப்பெருக - ஸத்வம் ரஜஸ் தமஸ் என்ற குணங்களின் கணமும் தோன்றிற்று.

(3) பிரகிருதி முதல் பூமி வரை படிப்படியாக உலகமாக விரியவிருக்கிற சிவ தத்துவங்கள், வித்யாதத்துவங்கள், ஆத்ம தத்துவங்கள் என்ற உட்பிரிவுடன் கூடிய மூலதத்துவங்கள் 36ம் ஒரு கணமாயின.

(4) விராட்ஸ்வரூபமாக விரிந்த உலகம் தனித்தனி உருக்கொள்ள அன்ன மயம், பிராணமயம், மனோமயம், விஜ்ஞான மயம், ஆனந்த மயம் என்று ஐந்து கோசங்களானது. அவ்வாறு கணங்களாக உருமாறியவரும் (கண:) அவற்றைத் தம் வசத்தில் கொண்ட பேராளுமை பெற்றவரும் (ஈச்வர:) அவரே என்பதை முதல் நாமம் விளக்குகிறது.

(5) மனித அறிவிற் கெட்டக்கூடிய அளவில் ஆகாயம் வாயு, அக்கினி, ஜலம், பூமி என்று அதிஸூக்ஷ்ம - ஸூக்ஷ்ம - ஸ்தூல நிலைகளில் அமைந்த மூலப்பொருள்களாகிய கணமும் அதன் ஈச்வரரும் அவரே.

https://archive.org/details/muthulakshmiacademy

